श्रीः ।

# शुक्लयजुर्वेदीयानाम्

## आह्निकम्

( प्रातःप्रभृतिसायान्तं सायादिप्रातरन्ततः कर्तव्यं नित्यकर्म )

दैवविद्वर्यकालमजबालभट्टेन संगृहीतम्

श्रीकृष्णदासात्मजेन खेमराजेन
मुम्बय्यां
स्वकीये श्रीवेङ्कटेश्वरयन्त्रालये
मुद्रितम् ।

शके १८१६. संवत् १९५१.

श्रीः।



# अथशुक्लयजुर्वेदीयाह्निकस्थविषयानुक्रमणिका।



## विपयाअनुक्रमणिका । 

इत्यनुक्रमणिका समाप्ता ॥

---

खेमराज श्रीकृष्णदास
श्रीवेङ्कटेश्वर छापाखाना
बम्बई.

॥ श्रीः ॥

# शुक्लयजुःशाखीयनित्याह्निकम् ।



वंदे श्रीदक्षिणामूर्तिं सच्चिदानंदविग्रहम् ॥
गौरीभूषितवामांगं ब्रह्म वा विष्णुसेवितम् ॥ १ ॥
पंचवक्त्रं हरिं सूर्यं कात्यायनमुनिं तथा ॥
नत्वाह्निकं ब्रुवे बालो दैवविश्र्यंबकात्मजः ॥ २ ॥
हारीतः—अज्ञानतमसांधानां भ्रामितानां कुदृष्टिभिः ॥
धर्मशास्त्रप्रदीपोयं धार्यो मार्गोपदेशकः ॥
मनुः—आचारः परमो धर्मो नृणां श्रेयस्करो महान् ॥
इह लोके परा कीर्तिः परत्र परमं सुखम्
आचारात्प्राप्यते श्रैष्ठ्यमाचारात्कर्म लभ्यते ॥
कर्मणा जायते ज्ञानं ज्ञानान्मोक्षमवाप्यते ॥
पराशरः—आचारः परमो धर्म आचारः परमं तपः ॥
आचारः परमं ज्ञानमाचारात्किं न साध्यते ॥
यस्त्वाचारविहीनोपि शब्दान्वेदपरायणः (१) ॥
सर्वधर्मबहिष्कारो यथा शूद्रस्तथैव सः ॥
स्मृत्यंतरे—लौकिकाचारोऽप्यावश्यकत्वेनोक्तः किं पुनः

१प्रथमो धर्म इति पाठांतरम् ।

शास्त्रीयः तथा—यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्याकर्षणक्षमः ॥ तथापि लौकिकाचारं मनसापि न लंघयेत् ॥

तथा—समयाचारिको धर्मो जातिदेशकुलोद्भवः ॥
ग्रामाचाराः परिग्राह्याः सर्वत्रैव यथोदितम् ॥

धर्ममूलमाह याज्ञवल्क्यः—श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ॥ सम्यक्संकल्पजः कालो धर्ममूलमिदं स्मृतम् ॥ पद्मपुराणे—बहुत्वादिह शास्त्राणां धर्ममूलं श्रुतिः स्मृतिः ॥ तयोर्विरोधो यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ॥ स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक्पृथक् ॥ वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥ वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम ॥ यो वैदिकमनादृत्य कर्म स्मार्तेतिहासिकम् ॥ मोहात्समाचरेद्विप्रो न स पुण्येन लिप्यते ॥ धर्मलक्षणमाह शंखः—देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ॥ पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥ हेमाद्रौ विष्णुधर्मोत्तरेपि ॥ गंगास्नानं शिवो देवो विप्रपूजात्मचिंतनम्॥ध्यानं नारायणस्यैतत्सकलं धर्मलक्षणम्॥तत्रैव बृहस्पतिः—दया क्षमाऽनुकंपा च शौचानायासमंगलम्॥अकर्मण्यमस्पृहत्वं सर्वसाधारणानि च॥कर्मकरणे दिङ्नियम उक्तः कर्मदीपे कात्यायनेन—यत्र दिङ्नियमो नास्ति जपहोमादिकर्मसु॥तिस्रस्तत्र दिशः प्रोक्ता ऐंद्री सौम्यापराजिता—गौतमः॥ रात्रावुदङ्मुखः कुर्याद्दैवं कार्यं सदैव हि॥शिवार्चनं सदाप्येवं

शुचिः कुर्यादुदङ्मुखः॥वराहपुराणे—स्नानपूजातर्पणादिजप-होमामरार्चनम् ॥ उपवासवता कार्यं सायं संध्याहुतीर्विना ॥ चतुर्विंशतिमते—इक्षूनपः फलं मूलं पयस्तांबूलमौषधम् ॥ भक्षयित्वापि कर्त्तव्याः स्नानदानादिकाः क्रियाः ॥ कर्मप्रदीपे—पित्र्यमंत्रानुद्रवणे आत्मालंभेऽघमर्षणे ॥ अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसंभवे॥निमित्तेष्वत्र सर्वत्र कर्म कुर्वन्नपः स्पृशेत् ॥ सदोपवीतिना भाव्यं सदा बद्धशिखेन च ॥ विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥ नवीनं धारयेद्विप्रो न जीर्णं न परैर्धृतम् ॥ त्रुटितं वा यदि भ्रष्टं पुनर्मंत्रेण धारयेत् ॥ ब्रह्मसूत्रे च सव्यांसे स्थिते यज्ञोपवीतिना ॥ प्राचीनावीतिनाऽसव्ये कंठस्थेऽनुपवीतिना ॥ मेखलामजिनं दंडमुपवीतं कमंडलुम् ॥ अप्सु प्रास्येद्विनष्टानि गृहीत्वान्यानि मंत्रतः ॥

## अथ सुप्रभातविधिः ॥

तत्र विष्णुः—गृहमेधिनि यत्प्रोक्तं स्वर्गसाधनमुत्तमम् ॥ ब्राह्मे मुहूर्ते उत्थाय तत्सर्वं सम्यगाचरेत् ॥ नाडिकाः षट्पंचाशत् ५६ प्रातस्त्वेकाधिकोऽरुणः ॥ उषः कालोऽष्टपंचाशच्छेषः सूर्योदयः स्मृतः ॥ ब्राह्ममुहूर्तश्च द्वेधा ॥ अंत्ययामात्मको रात्रेरुपांत्यमुहूर्तश्च ॥ तत्राद्यः पितामहेनोक्तः ॥ रात्रेस्तु पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते ॥ द्वितीयस्तु प्रयोगपारिजाते—रात्रिगतमुहूर्तपंचदशकं प्रक्रम्य ॥ ब्राह्मो नाम

स्वतश्चैव मुहूर्तक्रमतो निशि ॥ ब्राह्मे मुहूर्ते चोत्थाय चिंतये-द्रघुनंदनं ॥ ब्राह्ममुहूर्त्तमारभ्य कार्यमिति केचित् ॥ रात्रेस्तु पश्चिमे यामे द्विजो वेदं विचिंतयेत्॥इति परशुरामनिबंधे कात्यायनोक्तेः ॥ अत्र स्वापे प्रायश्चित्तमुक्तं स्मृतिरत्नावल्याम् ॥ ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी ॥ तां करोति द्विजो मोहात्पादकृच्छ्रेण शुध्यति ॥ब्राह्मे मुहूर्ते उत्थायाचम्येष्टदेवतां नमस्कृत्य प्रातःस्मरणम् ॥ व्यासः—महर्षिर्भगवान्व्यासः कृत्वेमां संहितां पुरा ॥ श्लोकैश्चतुर्भिर्धर्मात्मा पुत्रमध्यापयच्छुकम् ॥ १ ॥ मातृपितृसहस्राणि पुत्रदारशतानिच ॥ संसारेष्वनुभूतानि यांति यास्यंति चापरे ॥ २ ॥ हर्षस्थानसहस्राणि भयस्थानशतानि च ॥ दिवसे दिवसे मूढमाविशंति न पंडितम् ॥ ३ ॥ उर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ॥ धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते॥ ॥ ४ ॥ न जातु कामान्नभयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः ॥ धर्मो नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः ॥ ५ ॥ इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् ॥ स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥ ६ ॥ प्रातः स्मरामि खलु तत्सवितुर्वरेण्यं रूपं हि. मंडलमृचोऽथ तनुर्यजूंषि ॥ सामानि यस्य किरणाः प्रभवादिहेतुं ब्रह्मा हरात्मकमलक्ष्यमचिंत्यरूपम्॥ १॥ प्रातर्नमामि तरणिं तनुवाङ्मनोभिर्ब्रह्मेंद्रपूर्वकसुरैर्नुतमर्चितं च ॥ वृष्टिप्रमोचनविनिग्रहहेतुभूतं त्रैलोक्यपालनपरं त्रिगुणात्मकं च ॥ १ ॥ प्रातर्भजा

मि सवितारमनंतशक्तिं पापौघशत्रुभयरोगहरं परं च॥ तं सर्व लोककलनात्मककालमूर्तिं गोकंठबंधनविमोचनमादिदेवम् ॥३॥श्लोकत्रयमिदं भानोःप्रातः प्रातःपठेत्तु यः॥स सर्वव्याधिनिर्मुक्तः परं सुखमवाप्नुयात्॥ ४ ॥ प्रातः स्मरामि गणनाथमनाथबंधुं सिंदूरपूरपरिशोभितगंडयुग्मम् ॥ उद्दंडविघ्नपरिखंडनचंडदंडमाखंडलादिसुरनायकवृंदवंद्यम्॥१॥ प्रातर्नमामि चतुराननवंद्यमानमिच्छानुकूलमखिलं च वरं दधानम्॥ तं तुंदिलं द्विरसनप्रिययज्ञसूत्रं पुत्रं विलासचतुरं शिवयोः शिवाय ॥ २ ॥ प्रातर्भजाम्यभयदं खलु भक्तशोकदावानलं गणविभुं वरकुंजरास्यम् ॥ अज्ञानकाननविनाशनहव्यवाहमुत्साहवर्द्धनमहं सुतमीश्वरस्य ॥ ३ ॥ श्लोकत्रयमिदं पुण्यं सदा साम्राज्यदायकम् ॥ प्रातरुत्थाय सततं यः पठेत्प्रयतः पुमान् ॥ ४ ॥ प्रातः स्मरामि शरदिंदुकरोज्वलाभां सद्रत्नयुक्तनककुंडलहारशोभाम्॥दिव्यायुधैर्युतसुनीलसहस्रहस्तां रत्नोत्पलाभचरणां भवतीं परेशाम्॥ १॥ प्रातर्नमामि महिपासुरचंडमुंडशुंभासुरप्रमुखदैत्यविनाशदक्षाम् ॥ ब्रह्मेंद्ररुद्रमुनिमोहनशीललीलां चंडीं समस्तसुरमूर्तिमनेकरूपाम्॥२॥ प्रातर्भजामि भजतामभिलाषदात्रीं धात्रीं समस्तजगतां दुरितापहंत्रीम् ॥ संसारबंधनविमोचनहेतुभूतां मायां परां समधिगम्य परस्य विष्णोः॥३॥श्लोकत्रयमिदं देव्याश्चंडिकायाः पठेन्नरः ॥ सर्वान्कामानवाप्नोति विष्णुलोके महीयते ॥ प्रातः स्मरामि भयभीतिहरं सुरेशं गंगाधरं वृषभवाहनमंबिकेशम् ॥

खट्वांगशूलवरदाभयहस्तमीशं संसाररोगहरमौषधमद्वितीयम् ॥१॥ प्रातर्नमामि गिरिशं गिरिजार्धदेहं सर्गस्थितिप्रलयकारणमादिदेवम्॥ विश्वेश्वरं विजितविश्वमनोभिरामं संसाररो० ॥ २ ॥ प्रातर्भजामि शिवमेकमनंतमाद्यं वेदांतवेद्यमनवं पुरुषं महांतम् ॥ नामादिभेदरहितं जडभावशून्यं संसाररो० ॥ ३ ॥ प्रातः समुत्थाय शिवं विचिंत्य श्लोकत्रयं चानुदिनं पठंति ॥ ते दुःखजालं वहुजन्मसंचितं हित्वा पदं यांति तदेव शंभोः ॥ ४ ॥ प्रातः स्मरामि भवभीतिमहार्तिशान्त्यै नारायणं गरुडवाहनमब्जनाभम् ॥ ग्राहाभिभूतवरवारणमुक्तिहेतुं चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥ १ ॥ प्रातर्नमामि मनसा वचसा च मूर्ध्ना पादारविंदयुगलं परमस्य पुंसः ॥ नारायणस्य नरकार्णवतारणस्य पारायणप्रवणविप्रपरायणस्य ॥ २ ॥ प्रातर्भजामि भजतामभयंकरं तं प्राक्सर्वजन्मकृतपापभयापहत्यै ॥ यो ग्राहवक्रपतितांघ्रिगजेंद्रघोरशोकप्रणाशनकरोधृतशंखचक्रः ॥३॥ श्लोकत्रयमिदं पुण्यं यः पठेत्सुसमाहितः ॥ लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः॥ ४ ॥ प्रातः स्मरामिरघुनाथमुखारविंदं मंदस्मितं मधुरभाषि विशालभालम् ॥कर्णावलंबिचलकुंडलशोभिगंडं कर्णांतदीर्घनयनं नयनाभिरामम् ॥ १ ॥ प्रातर्नमामि रघुनाथकरारविंदं रक्षोगणाय भयदं वरदं निजेभ्यः ॥ यद्राजसंसदि विभज्य महेशचापं सीताकरग्रहणमंगलमाप सद्यः ॥ २ ॥ प्रातर्भजामि रघुनाथपदारविंदं पद्मांकु-

शादिशुभेरखि शुभावहं मे ॥ योगींद्रमानसमधुव्रतसेव्यमानं शापापहं सपदि गौतमधर्मपत्न्याः ॥ ३ ॥ प्रातर्वदामि वचसा रघुनाथनाम वाग्दोपहारि सकलं शमलं निहंति ॥ यत्पार्वती स्वपतिना सह भोक्तुकामा प्रीत्या सहस्रहरि नामसमं जजाप ॥ ४ ॥ प्रातः श्रये श्रुतिनुतां रघुनाथमूर्तिं नीलांबुजोत्पलसितेतरपद्मनीलाम् ॥ आमुक्तमौक्तिकविशेषविभूषणाढ्यां ध्येयां समस्तमुनिभिर्जनमुक्तिहेतुम् ॥ ५ ॥ यः श्लोकपंचकमिदं नियतः पठेत नित्यं प्रभातसमये पुरुषः प्रबुद्धः ॥ श्रीरामकिंकरजनेषु स एव मुख्यो भूत्वा प्रयाति हरिलोकमनन्यलभ्यम् ॥ ६ ॥ ब्रह्मा मुरारिस्त्रिपुरांतकारी भानुः शशी भूमिसुतो बुधश्च॥गुरुश्च शुक्रः शनिराहुकेतवः कुर्वंतु सर्वे मम सुप्रभातम् ॥ १ ॥ भृगुर्वसिष्ठः क्रतुरंगिराश्च मनुः पुलस्त्यः पुलहश्च गौतमः॥रैभ्यो मरीचिश्च्यवनोपि दक्षः कुर्वंतु० ॥२॥सनत्कुमारः सनकः सनंदनः सनातनोऽप्यासुरपिंगलौ च ॥ वोढुस्तथा पंचशिखः स योगी कुर्वं० ॥३॥ सप्तार्णवाः सप्त कुलाचलाश्च सप्तर्षयो द्वीपवनानि सप्त ॥ भूरादि कृत्वा भुवनानि सप्त कुर्वंतु० ॥ ४ ॥ पृथ्वी सगंधा सरसास्तथाऽऽपः स्पर्शी च वायुर्ज्वलनं च तेजः ॥ नभः सशब्दं महता सहैव कुर्वंतु० ॥ ५ ॥ इत्थं प्रभाते परमं पवित्रं पठेत्स्मरेद्वा शृणुयाच्च भक्त्या ॥ दुःस्वप्ननाशो धनधान्य लाभो भवेच्च नित्यं भगवत्प्रसादात् ॥ ६ ॥ अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः ॥ कृपः परशुरामश्च सप्तैते चि-

रजीविनः॥सप्तैतांश्च स्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ॥ जीवे-द्वर्षशतं साग्रमपमृत्युविवर्जितः॥अहल्या द्रौपदी सीता तारा मंदोदरी तथा ॥ पंचकं ना स्मरेन्नित्यं महापातकनाशनम् ॥ पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ॥ पुण्यश्लोको-विदेहश्च पुण्यश्लोको जनार्दनः ॥ पृथ्वीप्रार्थना ॥ समुद्रवसने देवि पर्वतस्तनमंडले ॥ विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ इति प्रातःस्मरणम्

## अथ मूत्रपुरीषोत्सर्गविधिः ।

तत्र पराशरः—ततः प्रातः समुत्थाय कुर्याद्विण्मूत्रमेव च॥ नैर्ऋत्यां दिशि विक्षेपमतीत्याभ्यधिकं भुवः ॥ अंगिराः—उत्थाय पश्चिमे रात्रेस्तत आचम्य चोदकम् ॥ अंतर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥ कृत्वा यज्ञोपवीतं तु पृष्ठतः कंठलंबितम् ॥ विण्मूत्रं तु गृही कुर्याद्यद्वा कर्णे समाहितः ॥ अयं च व्यवस्थितविकल्पः ॥ याज्ञवल्क्यः ॥ दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ॥ कुर्यान्मूत्रं पुरीषं च रात्रौ चेद्दक्षिणामुखः ॥ कर्णोत्र दक्षिणः ॥ पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेदिति लिंगाच्च ॥ हारीतः—उत्सर्गे मैथुने होमे प्रस्रावे दंतधावने ॥ स्नाने भोजनकाले च पट्सु मौनं विधीयते ॥

श्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ॥ गंधलेपक्षयकरं शौचं कुर्या-दतंद्रितः ॥ द्वे लिंगे मृत्तिके देये गुदे पंच करे दश ॥ उभयोः सप्त दातव्या विट्शौचे मृत्तिकाः स्मृताः ॥ एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥ त्रिगुणं स्याद्वनस्थानां यतीनां स्याच्चतुर्गुणम् ॥ शौचादृते वामपादे पूर्वं न क्षालनं भवेत् ॥ शौचे तु वामपूर्वं स्यादन्यत्र दक्षिणं सदा ॥ रात्र्यादौ विशेषः ॥ दिवा यद्विहितं शौचं तदर्धं निशि कीर्तितम् ॥ तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि ॥ स्त्रीशूद्रयोरर्धमानं शौचं प्रोक्तं मनीषिभिः ॥ आर्तः कुर्याद्यथाशक्ति स्वस्थः कुर्याद्यथोदितम् ॥ आश्वलायनः–लिंगशौचं पुरा कृत्वा गुदशौचं ततः परम् ॥ गृहीत्वा जलपात्रं तु विण्मूत्रं कुरुते यदि ॥ तज्जलं मूत्रसदृशं पीत्वा चांद्रायणं चरेत् ॥ उक्तशौचाकरणे प्रायश्चित्तं स्मृतिरत्नावल्याम्–गायत्र्यष्टशतं चैव प्राणायामत्रयं तथा ॥ अंगिराः ॥ मूत्रोत्सर्गं द्विजः कृत्वा न कुर्याच्छौचमात्मनः ॥ मोहाद्भुक्त्वा त्रिरात्रेण जलं पीत्वा विशुध्यति ॥ आश्वलायनः ॥ कुर्याद्द्वादश गंडूषान्पुरीषोत्सर्जने ततः ॥ मूत्रोत्सर्गे तु चतुरो भोजनांते तु षोडश ॥ तीर्थे शौचं न कुर्वीत कुर्वीतोद्धृतवारिणा ॥ अंजलिमात्रं जलं त्यक्त्वा कुर्याच्छौचमनुद्धृते ॥ दशहस्तान्परित्यज्य मूत्रं कुर्याज्जलाशये ॥ शतहस्तान्पुरीषं तु तीर्थे नद्यां चतुर्गुणम् ॥ अरण्ये निर्जने रात्रौ चौरव्यालाकुले पथि ॥ कृत्वा मूत्रं पुरीषं तु द्रव्यहस्तो न दुष्यति ॥

अपकृष्य च विण्मूत्रं काष्ठलोष्टतृणादिना ॥ उदस्तवासा उत्तिष्ठेद्दृढंविधृतमेहनः ॥ इति शौचविधिः ॥

## अथाचमनविधिः ॥

तत्रैव कौर्मे ॥ चांडालम्लेच्छसंभाषे स्त्रीशूद्रोच्छिष्टभाषणे ॥ उच्छिष्टपुरुषं स्पृष्ट्वा भोज्यं चापि तथाविधम् ॥ आचामेदश्रुपाते च लोहितस्य तथैव च ॥ मार्कंडेयपुराणे ॥ देवार्चनादिकार्याणि तथा गुर्वभिवादनम् ॥ कुर्वीत सम्यगाचम्य तद्वदेव भुजिक्रियाम्॥द्विराचमननिमित्तान्याह व्यासः॥ दाने भोजनकाले च संध्ययोरुभयोरपि ॥ आचांतः पुनराचामेज्जपहोमसुरार्चने ॥ रेतोमूत्रपुरीषाणामुत्सर्गेऽशुद्धभाषणे ॥ द्राक्षादीनि फलानीक्षून्पयो मूलं घृतं दधि ॥ तांबूलमौषधं पत्रं हविर्भुक्त्वापि नाचमेदिति ॥ आचमनविधिमाह योगी ॥ अंतर्जानुः शुचौ देश उपविश्य उदङ्मुखः ॥ प्राग्वा ब्राह्मेण तीर्थेण द्विजो नित्यमुपस्पृशेत् ॥ जलग्रहणे कण्वः॥ आयतं पूर्वतः कृत्वा गोकर्णाकृतिवत्करम् ॥ संहतांगुलिना तोयं गृहीत्वा पाणिना द्विजः॥ मुक्तांगुष्ठकनिष्ठेन शेषेणाचमनं चरेत्॥तीर्थमाह योगी ॥ कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रं करस्य च ॥ प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ वृद्धपराशरः ॥ पंचतीर्थानि विप्रस्य करे संति च दक्षिणे ॥ ब्राह्मं दैवं तथा पैत्र्यं प्राजापत्यं च सौमिकम्॥ करतले तु अग्नितीर्थेन प्रतिग्रहः ॥ आचमनार्थं तोयमाह शंखः ॥ अद्भिः समुद्ध

ताभिस्तु हीनाभिः फेनबुद्बुदैः ॥ वह्निना नाभितप्ताभिरक्षारा भिरुपस्पृशेत् ॥ उपस्पृशेदाचामेत् गोभिलः ॥ जानुभ्या-मूर्ध्वमाचम्य जले तिष्ठन्न दुष्यति ॥ नाभेरधस्तथा तिष्ठ-न्नाचामेदविचक्षणः ॥ पादक्षालनशेषेण नाचामेद्वारिणा द्वि-जः ॥ शुद्धाभावे भवेत्किंचित्त्यक्त्वा भूमौ ततो जलम् ॥ स्पृशंति बिन्दवः पादौ यस्य चाचमतः परान् ॥ भौतिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥ पराशरः ॥ क्षुते निष्ठीवने जृंभे दंतोच्छिष्टे तथानृते॥पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् ॥ उदकाभावे आर्द्रतृणं गोमयं भूमिं वा संस्पृशेत्॥ आपस्तंबः ॥ संध्यार्थं भोजनार्थं वा देवार्थं पितृकर्मणि ॥ नाजपेच्छूद्रहस्तात्तु जपादिहवनेषु च ॥ अपः करनखस्पृष्टा य आचामयति द्विजः ॥ सुरां पिबति सोऽप्यस्मान्न तथापः पिबेन्नरः ॥ अगस्त्यसंहितायाम् ॥ केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ॥ द्वाभ्यामोष्ठौ तु संमृज्य द्वाभ्यामु-न्मार्जनं तथा ॥ एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः ॥ संप्रोक्ष्यैकेन मूर्द्धानं ततः संकर्षणादिभिः ॥ आस्यं नासा-क्षिकर्णौ च नाभिहृत्कंठभुजौ स्पृशेत् ॥ एवमाचमनं कृत्वा साक्षान्नारायणो भवेत्॥ शंखः ॥ तर्जन्यंगुष्ठयोगेन स्पृशेन्ना-सापुटद्वयम् ॥ अंगुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे पुनः पुनः ॥ कनिष्ठांगुष्ठयोर्नाभिं हृदये च तलेन वै॥ सर्वाभिस्तु ततः शीर्षं बाहुं चाग्रेण संस्पृशेत् ॥

## अथ प्रयोगः ॥

शुचौ देशे भूमिष्टपादोंऽतर्जानुहस्तः प्राङ्मुखो वोदङ्मुखउपविश्य संहतांगुलिना करेण शुद्धं जलं गृहीत्वा मुक्तांगुष्ठकनिष्ठेन वामेनान्वारब्धेन ब्राह्मतीर्थेन केशव नारायण माधवेति संबोधनांतैस्त्रिभिर्नामभिस्त्रिः पिबेत् ॥ गोविंद विष्णो इति द्वाभ्यां करौ प्रक्षाल्य ॥ मधुसूदन त्रिविक्रमेति द्वाभ्यां अंगुष्ठमूलेनौष्ठौ संमृज्य ॥ वामनश्रीधरेति द्वाभ्यां मुखोन्मार्जनम् ॥ हृषीकेशेति वामकरं प्रोक्ष्य ॥ पद्मनाभेति पादौ संप्रोक्ष्य ॥ दामोदरेति मूर्द्धानं संस्पृश्य ॥ संकर्षणेति संहितमध्यमांगुलित्रयेणास्यं संस्पृश्य ॥ वासुदेव प्रद्युम्नेति द्वाभ्यामंगुष्ठतर्जनीभ्यां नासापुटे संस्पृश्य ॥ अनिरुद्ध पुरुषोत्तमेति द्वाभ्यामंगुष्ठानामिकाभ्यां चक्षुषी संस्पृश्य ॥ अधोक्षज नारसिंहेति द्वाभ्यां तथैव श्रोत्रे संस्पृश्य ॥ अच्युतेति कनिष्ठांगुष्ठाभ्यां नाभिं संस्पृश्य ॥ जनार्दनेति पाणितलेन हृदयं संस्पृश्य ॥ उपेंद्रेति सर्वांगुलिभिः कंठं संस्पृश्य ॥ हरे कृष्ण इति द्वाभ्यां दक्षिणवामबाहुमूले स्पृशेत् ॥ एवमाचमनासंभवे स्मृत्यर्थसारे ॥ त्रिः पीत्वा हस्तं प्रक्षाल्य श्रोत्रं स्पृशेत् ॥ इत्याचमनविधिः ॥

अथ दंतधावनम् ॥ दक्षः— मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ॥ तदार्द्रकाष्ठं शुष्कं वा भक्षयेद्दंतधावनम् ॥ कात्यायनोपि ॥ उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समा-

हितः ॥ परिजप्य च मंत्रेण भक्षयेद्दंतधावनम् ॥ अत्र कालनिषेधमाह ॥ प्रतिपद्दर्शषष्ठीषु नवम्यां चैव भारत ॥ दंतानां काष्ठसंयोगाद्दहत्यासप्तमं कुलम् ॥ अष्टम्योश्च चतुर्दश्योः पंचदश्यां त्रिजन्मसु ॥ व्यतीपाते च संक्रांतौ दंतकाष्ठं न भक्षयेत् ॥ शन्यर्कशुक्रवारे तु कुजाहे प्रेतवासरे ॥ जन्माहे श्राद्धदिवसे दंतकाष्ठं विवर्जयेत् ॥ अलाभे दंत काष्ठानां निषिद्धायां तिथौ तथा ॥ अपां द्वादश गंडूषैर्विदध्याद्दंतधावनम् ॥ द्वादशांगुलिकं विप्रे काष्ठमाहुर्मनीषिणः ॥ शूद्रविट्क्षत्रजातीनां नवषट्चतुरंगुलम् ॥ तिंतिणीवेणुपृष्ठं तु आम्रनिंबौ तथैव च ॥ अपामार्गश्च विल्वश्च अर्कश्चोदुंबरस्तथ ॥ बदरी तिंदुकास्त्वेते प्रशस्ता दंत धावने ॥ अंगिराः ॥ प्रक्षाल्य भक्षयेत्काष्ठं प्रक्षाल्यैवतु संत्यजेत् ॥ आयुरित्यादि मंत्रोयमुक्तः शाखानिमंत्रणे ॥ स्नानकालेषु यो विप्रो भक्षयेद्दंतधावनम् ॥ देवाश्चैव न गृह्णंति पितरश्चोदकक्रियाम् ॥ तन्मध्याह्नस्नानविषयम् ॥ विष्णुः ॥ कंटकीक्षीरवृक्षोत्थं ससत्वं द्वादशांगुलम् ॥ कनिष्ठिकाग्रवत्स्थूलं जिह्वामेखनिका पृथक् ॥ आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ॥ ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ इति मंत्रेणाभिमंत्रितेन काष्ठेन ॥ मुखदुर्गंधिनाशाय दंतानां च विशुद्धये ॥ ष्ठीवनाय च गात्राणां कुर्वेऽहं दंतधावनम् ॥ इति दंतधावनम् ॥ अथ यज्ञोपवीतविधिः ॥ कार्पासमुपवीतं स्याद्विप्रस्योर्ध्वं वृतं त्रिवृत् ॥

स्थाने पवित्रे संख्याये षण्णवत्यंगुलीषु च ॥ त्रिवृदूर्ध्वं वृतं कुर्यात्तंतुत्रयमधो वृतम् ॥ त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रंथिरिष्यते ॥ सावित्र्या तु त्रिवृत्कुर्यान्नव सूत्रं तु तद्भवेत् ॥ नवतंतूनां देवताः ॥ ॐकारश्चाग्निनागौ च सोमः पितृप्रजापती ॥ वायुः सूर्योऽखिला देवा इत्याहुस्तंतुदेवताः ॥ त्रिपुच्छिन्नमधोयातमनध्याये कृतं च यत् ॥ कृतं वाऽशुचिना यच्च भुक्त्वा निर्मितमुत्सृजेत् ॥ स्तनादूर्ध्वमधो नाभेस्तन्न धार्यं कदाचन ॥ पृष्ठे चांशे च नाभ्यां च धृतं यद्विदते कटिम् ॥ यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ॥ वस्त्राभावे तृतीयं तु एकं तु ब्रह्मचारिणि ॥ तथाब्रह्मचारिण एकं तु स्नानात्प्रभृति तद्द्वयम् ॥ गृहस्थेन सदा धार्यं तृतीयं चोत्तरीयकम्॥धारयेन्नित्यमेतानि आयुः कामो बहून्यपि ॥ ब्रह्मचारिणि चैवं स्यात्तस्मिन्नेव द्वितीयकम् ॥ उपवीतमलंकारं स्रजं करकमेव च ॥ उपानहौ च वासश्च धृतमन्येन धारयेत्॥मेखलामजिनं दंडमुपवीतं कमंडलुम्॥ अप्सु प्रास्येद्विनष्टानि गृहीत्वान्यानि मंत्रवत् ॥ मलापकर्षणे स्नाने गात्राभ्यंगे तथैव च ॥ ब्रह्मसूत्रं पृथक्कुर्यादन्यत्र पतितो भवेत्॥तस्य ग्रहणमंत्रः ॥ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ॥ आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥ इत्यनेन च मंत्रेण सततं धारयेद्बुधः॥इति यज्ञोपवीतविधिः॥अथ शिखाग्रंथिविमोकः ॥

भोजने शयने संगे तथा मार्गे परिग्रहे ॥ वाग्वादेषु तथा शौचे शिखाग्रंथिं विसर्जयेत् ॥ तत्र व्यासः ॥ स्मृत्वोंकारं च गायत्रीं निबध्नीयाच्छिखां द्विजः ॥पुनराचम्य हृदयं बाहू स्कंधौ च संस्पृशेत् ॥ चतुर्विंशतिमतात् ॥ मानस्तोकेति मंत्रेण शिखाबंधनमाचरेत् ॥ जपं हिंसंति विप्राणां रक्षा कर्मविवर्जनात् ॥ येनाक्रांतास्त्रयो लोका दानवाश्च वशी कृताः ॥ शरणं सर्वलोकानां स मे विष्णुः प्रसीदतु ॥ इति शिखाबंधनम् ॥

## अथ दर्भविचारः ॥

नभोमासे त्वमावास्या तस्यां दर्भोच्चयः स्मृतः ॥ अयातयामास्ते दर्भा नियोक्तव्याः पुनः पुनः ॥ शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ॥ ॐकारेणैव मंत्रेण सकृदेव कुशान्स्पृशेत् ॥ कुशस्पर्शनमंत्रः ॥ विरंचिना सहोत्पन्नः परमेष्ठिनिसर्गजः ॥ नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव ॥ विना दर्भेण यत्स्नानं यच्च दानं विनोदकम्॥ असंख्यातं च यज्जप्यं तत्सर्वं निष्फलं भवेत् ॥ प्रयोगपारिजाते ॥ कुशाः काशा यवा दूर्वा उशीराश्च सकुंदकाः ॥ गोधूमा व्रीहयो मुंजा दश दर्भाः सबिल्वजाः ॥ व्यासः ॥ कुशैः पूतं भवेत्स्नानं कुशेनोपस्पृशेज्जलम् ॥ कुशेन चोद्धृतं तोयं सोमपानेन संमितम् ॥ त्रिशाखस्तु भवेद्दर्भश्चतुःशाखः कुशः स्मृतः ॥ पंचशाखस्तु कल्माषः षट्शाखः प्रव

रस्तथा॥ सप्तशाखस्तु कुतप ऊर्ध्वं बर्हिः प्रकीर्तितः ॥ एकशाखो द्विशाखो वा तृणवत्कथ्यते बुधैः ॥ सप्तपत्राः शुभा दर्भास्तिलक्षेत्रसमुद्भवाः ॥ अच्छिन्नाग्रा अशुष्काग्राः प्रादेशाग्राः प्रमाणतः ॥ पवित्रलक्षणं कात्यायनः ॥ अनंतगर्भिणं साग्रं कौशं द्विदलमेव च ॥ प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ चतुर्भिर्दर्भविदलैः पवित्रं ब्राह्मणस्य वै ॥ एकैकं ह्रासयेत्तंतु वर्णे वर्णे यथाक्रमम् ॥ त्रिगुणीकृतरज्जुं तु त्रिवृत्या संनियोजयेत् ॥ ब्रह्मग्रंथिः स विज्ञेयः सदा मौंज्यादिकर्मसु ॥ समूलाग्रौ विगर्भौ तौ कुशौ द्वौ दक्षिणे करे ॥ सव्ये चैव तथा त्रीणि बिभृयात्सर्वकर्मसु ॥ स्नाने दाने जपे होमे स्वाध्याये पितृतर्पणे ॥ पवित्रं तु करे कृत्वा सौवर्णं राजतं तु वा ॥ योगी याज्ञवल्क्यः ॥ अनामिकाधृतं हैमं तर्जन्यां रूप्यमेव च ॥ कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः॥ मूलपर्वणि कुर्वाणो महत्या हीयते श्रिया ॥ मध्यपर्वणि कुर्वाणः पुत्रदारैर्वियुज्यते ॥ अनामिकाग्रपर्वस्थं पवित्रं बिभृयात्सदा ॥ सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ॥ नोच्छिष्टं तत्पवित्रं स्याद्भुक्तोच्छिष्टं तु वर्जयेत्॥त्याज्या दर्भाः॥ अपूता गर्भिता दर्भा ये चान्ये छेदिता नखैः ॥ मार्गजा अग्निदग्धाश्च कुशान्यत्नेन वर्जयेत्॥हारीतः॥ समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत् ॥ शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतंत्यधः ॥ इति दर्भलक्षणम् ॥

## अथ प्रातःस्नानम् ॥

योगी याज्ञवल्क्यः ॥ अगम्यागमनात्पापं पापेभ्यश्च प्रतिग्रहात् ॥ रहस्याचरितात्पापान्मुच्यते स्नानमाचरन् ॥ अस्नात्वा नाचरेत्कर्म जपहोमादिकं च न ॥ प्रातः समाचरेत्स्नानं तच्च नित्यमिति स्मृतम् ॥ तच्च त्रिविधम् ॥ नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ॥ व्यासः ॥ स्नानं तु द्विविधं प्रोक्तं मुख्यगौणप्रभेदतः ॥ तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं भवेत् ॥ मार्कंडेयः ॥ अस्नातस्य क्रियाः सर्वा भवंतीह्यफला यतः ॥ उच्छिष्टाद्युपघातादौ तथैव मृतसूतके ॥ चंद्रसूर्योपरागादौ स्नानं नैमित्तिकं स्मृतम् ॥ गौणस्नानं जाबालिः ॥ असामर्थ्याच्छरीरस्य देशकालाद्यशक्तितः ॥ मंत्रस्नानादितः सप्त केचिदिच्छंति सूरयः ॥ योगी ॥ मांत्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च ॥ वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् ॥ स्नानविधिः ॥ सततं प्रातरुत्थाय दंतधावनपूर्वकम् ॥ आचरेदुषसि स्नानं तर्पयेत्पितृदेवताः ॥ वसिष्ठः ॥ अत्यंतमलिनः कायो नवच्छिद्रसमन्वितः ॥ स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम् ॥ प्रातःसंक्षेपतःस्नानं शौचार्थं तु तदिष्यते ॥ मंत्रैस्तु विधिनिष्पाद्यं मध्याह्ने तु सविस्तरम् ॥ निषिच्य तीरं कुशपिंजुलानि पूर्वोत्तराग्राणि मृदं न्यसेच्च ॥ प्रक्षाल्य पादौ च मुखं च कंठं यज्ञोपवीतं च जलं पिबेत्त्रिः ॥ नाभिमात्रे जले गत्वा त्रिःकुर्या-

देव नश्यति ॥ मनुः—देवर्षिपितृणां चैव एकद्वित्रिक्रमेण तु ॥ जले दद्याज्जलं चात्र असंस्कृतां तटे तथा ॥ स्नानादनंतरं तावत्तर्पयेत्पितृदेवताः ॥ उत्तीर्य पीडयेद्वस्त्रं संध्याकर्म ततः परम् ॥ व्यासः—यज्ञोपवीती देवानां निवीती ऋपितर्पणे ॥ प्राचीनावीती पित्र्ये तु स्वेन तीर्थेन भावितः ॥ उशनाः—द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकांजलिम् ॥ गोशृंगमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥ ब्रह्मवैवर्ते ॥ नाभि मात्रे जले स्थित्वा कुर्यात्स्नानांगतर्पणम् ॥ देवा नृषीन्पितृगणान्स्वपितॄंश्चापि तर्पयेत् ॥ स्नानांगतर्पणं कुर्याद्यक्ष्मणे जलमाहरेत् ॥ मेधातिथिः—एकेन वाससा स्नानं द्वाभ्यामनियमः स्मृतः ॥ बहुभिः प्रतिपेधः स्यात्स्नाने च फलमीप्सितम् ॥ न जलं ताडयेत्पद्भ्यां न जले तु मलं त्यजेत् ॥ मलं प्रक्षालयेत्तीरे ततः स्नानं समाचरेत् ॥ मृते जन्मनि संक्रांतौ श्राद्धजन्मदिने तथा ॥ अस्पर्शास्पर्शने चैव न स्नायादुष्णवारिणा ॥ वह्नितप्ता अपः संतः[१] स्नानमुष्णेन वारिणा ॥ आतुरविषयमिदम् ॥ स्नानस्य वह्नितप्तेन तथैव परवारिणा ॥ शरीरशुद्धिर्विज्ञेया नतु स्नानफलं भवेत् ॥ योगी—प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ॥ यतौ त्रिषवणं स्नानं सकृच्च ब्रह्मचारिणि ॥ देवलः—भुक्त्वा वा यदि वाऽभुक्त्वा दिवा वा यदि वा निशि ॥ न कालनियमः स्नाने नदीं प्राप्य समुद्रगाम् ॥

---

१ प्रशंसतीति शेषः ।

आतुरस्नानसंप्राप्तौ दशकृत्वस्त्वनातुरः ॥ स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्धः स आतुरः ॥ निर्झरीयप्रवाहस्तु सर्वा नद्यो रजस्वलाः ॥ तासु स्नानं न कुर्वीत वर्जयित्वा समुद्र-गाम् ॥ गंगा च यमुना चैव कृष्णा चैव सरस्वती ॥ रजसा नाभिभूयंते ये चान्ये नदसंज्ञकाः ॥ चंद्रसूर्यग्रहादौ च रजो-दोषो न विद्यते ॥ शिवालयसमीपस्थं तोयं पुण्यतमं स्मृ-तम् ॥ अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन ॥ अश्वत्थं मंदवारे तु समुद्रं पर्वणि स्पृशेत् ॥ सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ॥ तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाम् ॥

## अथ प्रातःस्नानप्रयोग ॥

अरुणोदयेऽतंरिक्षस्थं गोमयं संगृह्य तदभावे भूमिष्ठमेवो पर्यधश्च संत्यज्य मध्यस्थं गृहीत्वान्यां स्नानसामग्रीं चादाय गंगादितीर्थमेत्य प्रक्षालितदेशे स्थाप्य मृज्जलाभ्यां पाणि पादौ प्रक्षाल्य दर्भपवित्रपाणिः यज्ञोपवीती शिखैकदेशबंधनं कुर्यात् ॥ पूर्ववदाचमनं प्राणायामत्रयं कृत्वा देशकालौ स्मृत्वा शुभपुण्यतिथौ मम कायवाङ्मनःकृतकर्मदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःस्नानमहं करिष्ये इति संकल्प्य ॥ ततो मृज्जलमादाय कटिं वस्त्यूरुं जंघे चरणौ करौ त्रिस्त्रिः प्रक्षाल्याऽऽचम्य ॥ ततो गोमयं सव्ये पाणौ कृत्वा ॥ ॐ भू-र्भुवः स्वरिति त्रेधा विभज्य दक्षिणभागं प्रणवेन प्राच्यां दिशि निक्षिप्योत्तरभागं च तीर्थे निक्षिप्य मध्यमभागं

१ गोर्युदात्पतनसमये गुदभूम्योरंतराळे एव ।

मानस्तोकेइति मंत्रेणाभिमंत्र्य गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ अश्वमश्वं चरंतीनामोषधीनां वने वने ॥ तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥ तन्मे रोगांश्च शोकांश्च पापं मे हर गोमयेति मंत्राभ्यां मूर्धादिसर्वांगमनुलिप्य ॥ इमं मेइति वरुणमावाह्य ॥ बद्धशिखां पुरतः कृत्वा प्रवहज्जले प्रवाहाभिमुखस्त्रिवारमवगाह्य शरीरं प्रक्षाल्य ॥ आपोहिष्ठेति त्रिभि मार्जनं विधाय ॥ अंगुष्ठमूलेन प्रदक्षिणमालोडयेत्तत्र मंत्रः ॥ इमम्मे वरुणेति मंत्रस्य शुनःशेपऋषिः गायत्रीछंद, वरुणो देवता जलालोडने विनियोगः ॥ ॐ इमम्मेव्वरुण श्रु० स्युराच के ॥ इत्यालोड्य जले मुखं कृत्वा नासाग्रं संपीड्यावमर्षणं कुर्यात् ॥ ऋतं च सत्यमिति तृचेन॥ऋतं चेति तृचस्याऽघमर्षण ऋषिः अनुष्टुप् छंदः भाववृत्तो देवताऽवमर्षणे विनियोगः ॥ ॐऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ॥ ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥ समुद्रादर्णवादधि संवत्सरो अजायत ॥ अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥ सूर्याचंद्रमसौ धाता यथा पूर्वमकल्पयत् ॥ दिवं च पृथिवीं चांतरिक्षमथो स्वः ॥ ३ ॥ ॐनमो नारायणायेति मार्जनम् ॥ द्रुपदादिवमिति पीत्वा ॥ ॐ विष्णुं स्मृत्वा केशवादिदामोदरांतैर्द्वादशनामभिर्द्वादशकृत्व आप्लुत्य योनिमुद्रया जलमादाय मूर्ध्नि मुखे बाह्वो हृदये पृष्ठदेशे गायत्र्याऽभिषिच्य ॥ नंदिनी नलिनी सीता

आतुरस्नानसंप्राप्तौ दशकृत्वस्त्वनातुरः ॥ स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्धः स आतुरः ॥ निर्झरीयप्रवाहस्तु सर्वा नद्यो रजस्वलाः ॥ तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाम् ॥ गंगा च यमुना चैव कृष्णा चैव सरस्वती ॥ रजसा नाभिभूयंते ये चान्ये नदसंज्ञकाः ॥ चंद्रसूर्यग्रहादौ च रजोदोषो न विद्यते ॥ शिवालयसमीपस्थं तोयं पुण्यतमं स्मृतम् ॥ अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन ॥ अश्वत्थं मंदवारे तु समुद्रं पर्वणि स्पृशेत् ॥ सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ॥ तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाम् ॥

## अथ प्रातःस्नानप्रयोग ॥

अरुणोदयेऽन्तरिक्षस्थं गोमयं संगृह्य तदभावे भूमिष्ठमेवो पर्यधश्च संत्यज्य मध्यस्थं गृहीत्वान्यां स्नानसामग्रीं चादाय गंगादितीर्थमेत्य प्रक्षालितदेशे स्थाप्य मृज्जलाभ्यां पाणि पादौ प्रक्षाल्य दर्भपवित्रपाणिः यज्ञोपवीती शिखैकदेशबंधनं कुर्यात् ॥ पूर्ववदाचमनं प्राणायामत्रयं कृत्वा देशकालौ स्मृत्वा शुभपुण्यतिथौ मम कायवाङ्मनःकृतकर्मदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःस्नानमहं करिष्ये इति संकल्प्य ॥ ततो मृज्जलमादाय कटिं वस्त्यूरू जंघे चरणौ करौ त्रिस्त्रिः प्रक्षाल्याऽऽचम्य ॥ ततो गोमयं सव्ये पाणौ कृत्वा ॥ ॐ भूर्भुवः स्वरिति त्रेधा विभज्य दक्षिणभागं प्रणवेन प्राच्यां दिशि निक्षिप्योत्तरभागं च तीर्थे निक्षिप्य मध्यमभागं

१ गोर्भूदात्पतनसमये गुदभूम्योरंतराले एव ।

मानस्तोकेइति मंत्रेणाभिमंत्र्य गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ अश्वमग्रे चरंतीनामोषधीनां वने वने ॥ तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥ तन्मे रोगांश्च शोकांश्च पापं मे हर गोमयेति मंत्राभ्यां मूर्धादिसर्वांगमनुलिप्य ॥ इमं मेइति वरुणमावाह्य ॥ बद्धशिखां पुरतः कृत्वा प्रवहज्जले प्रवाहाभिमुखस्त्रिवारमवगाह्य शरीरं प्रक्षाल्य ॥ आपोहिष्ठेति त्रिभि र्मार्जनं विधाय ॥ अंगुष्ठमूलेन प्रदक्षिणमालोडयेत्तत्रः मंत्रः ॥ इमम्मे वरुणेति मंत्रस्य शुनःशेपऋषिः गायत्रीछंद, वरुणो देवता जलालोडने विनियोगः ॥ ॐ इमम्मेव्वरुण श्रु० स्युराच के ॥ इत्यालोड्य जले मुखं कृत्वा नासाग्रं संपीड्याघमर्षणं कुर्यात् ॥ ऋतं च सत्यमिति तृचेन॥ऋतं चेति तृचस्याऽघमर्षण ऋषिः अनुष्टुप् छंदः भाववृत्तो देवताऽघमर्षणे विनियोगः ॥ ॐऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ॥ ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥ समुद्रादर्णवादधि संवत्सरो अजायत ॥ अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥ सूर्याचंद्रमसौ धाता यथा पूर्वमकल्पयत् ॥ दिवं च पृथिवीं चांतरिक्षमथो स्वः ॥ ३ ॥ *ॐनमो नारायणायेति मार्जनम् ॥ द्रुपदादिवमिति पीत्वा ॥* ॐ विष्णुं स्मृत्वा केशवादिदामोदरांतैर्द्वादशनामभिर्द्वादशकृत्व आप्लुत्य योनिमुद्रया जलमादाय मूर्ध्नि मुखे बाहौ हृदये पृष्ठदेशे गायत्र्याऽभिषिच्य ॥ नंदिनी नलिनी सीता

मालती च मलापहा ॥ विष्णुपादाब्जसंभूता गंगा त्रिपथ गामिनी ॥ भागीरथी भोगवती जाह्नवी त्रिजटेश्वरी ॥ द्वादशैतानि नामानि स्नानकाले सदा पठेत् ॥ ततः नाभिमात्रजलगतः स्नानांगतर्पणं कुर्यात् ॥ तच्चेत्थम् ॥ प्राङ्मुखः साक्षताभिरद्भिरुपवीती ब्रह्मादयो ये देवास्तान्देवांस्तर्पयामि ॥ भूर्देवांस्तर्पयामि ॥ भुवर्देवांस्तर्पयामि ॥ स्वर्देवांस्तर्पयामि ॥ भूर्भुवःस्वर्देवांस्तर्पयामि ॥ इति पंचभिर्मन्त्रैरेकैकमंजलिं देवतीर्थेन दद्यात् ॥ ततो निवीत्युदङ्मुखः॥ कृष्णद्वैपायनादयो ये ऋषयस्तानृषींस्तर्पयामि ॥ भूर्ऋषींस्तर्पयामि ॥ भुवर्ऋषींस्तर्पयामि ॥ स्वर्ऋषींस्तर्पया ॐ भूर्भुवःस्वर्ऋषींस्तर्पयामीति पंचभिः द्वौद्वौ अंजली सयवाभिरद्भिः प्राजापत्येन तीर्थेन दत्त्वा ॥ अथ दक्षिणाभिमुखः प्राचीनावीती पितृतीर्थेन सतिलाभिरद्भिरग्निष्वात्तादयो ये पितरस्तान्पितॄंस्तर्पयामि ॥ ॐ भूःपितॄंस्तर्पयामि ॐ भुवःपितॄंस्तर्पयामि ॐ स्वः पितॄंस्तर्पयामि ॐ भूर्भुवःस्वः पितॄंस्तर्पयामि ॥ इति पंचभिस्त्रिस्तर्पयित्वा ॥ तीरमेत्य ॥ अग्निदग्धाश्च ये जीवा येप्यदग्धाः कुले मम ॥ भूमौ दत्तेन तोयेन तृप्ता यांतु परांगतिमिति मंत्रेण अंजलिं तटे निक्षिप्य ॥ ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ॥ ते गृह्णंतु मया दत्तं वस्त्रनिष्पीडनोदकमिति वस्त्रं निष्पीडच उपवीती ॥ यन्मया दूषितं तोयं शारीरमलसंभवात् ॥ तद्दोषपरिहारा

र्थं यक्ष्माणं तर्पयाम्यहमिति यक्ष्मतर्पणं विधाय ॥ शिखोदकं भूपतितं पिबंतु पितरो मम ॥ तस्माच्छिखोदकं दद्यात्पितॄणां तृप्तिहेतवे ॥ बहिर्निर्गत्य शुष्कं वासः परिधायोत्तरीयार्थं द्वितीयं च प्रावृत्य चतुर्गुणीकृतं परिधानीयमुपरिदशं निष्पीड्य द्विराचामेत् ॥ इति प्रातःस्नानविधिः ॥ प्रसंगाद्गृहस्नानविधिः ॥ शंखः–नित्यं नैमित्तिकं चैव क्रियांगं मलकर्षणम् ॥ शक्त्यभावे तु कर्तव्यमुष्णोदकपरोदकैः ॥ यमः– आपएव सदा पूतास्तासां वह्निर्विशोधकः ॥ तस्मात्कालेषु सर्वेषु उष्णांभः पावनं स्मृतम् ॥ व्यासः ॥ शीतास्वप्सु निषिंच्योष्णा मंत्रसंभारयोगतः ॥ गृहेऽपि शस्यते स्नानं तद्धीनमफलं स्मृतम् ॥ पादौ प्रक्षालयेत्पूर्वं मुखं यज्ञोपवीतकम् ॥ द्विराचम्य कराभ्यां तु दर्भान्धृत्वा शिखां स्पृशेत् ॥ प्राणायामं ततः कृत्वा कालज्ञानं भवेत्ततः ॥ पूर्वोत्तरामुखो भूत्वा इत्थं तु स्नानमाचरेत् इपेत्यादिरयं ब्रह्मांते विवस्वान्नृपिसत्तमः ॥ देवः प्रजापतिः सर्वेछंदांसि च यजूंषि च ॥ वायव्यानि च सौराणि नियोगः सर्वकर्मसु ॥ इत्युक्त्वा सप्तभिर्मंत्रैरभिषिंचेद्द्विजोत्तमः ॥ इमम्मे आपोहिष्ठा च योवस्तस्माअरं ततः ॥ इदमापश्च द्रुपदां शन्न एभिर्विशोधयेत् ॥ शीतोदकं तु दर्भांश्च पश्चादुष्णोदकं क्षिपेत् ॥ गंगां स्मृत्वा गृहे स्नायान्न पुनः श्रोत्रवंदनम् ॥ न त्यजेत्करदर्भांश्च नार्द्रवासाश्च तर्पयेत् ॥ मनुः– रविसंक्रांतिवारेषु ग्रहणे च शशिक्षये ॥ व्रतेषु चैव षष्ठ्यां च

न स्नायादुष्णवारिणा ॥ गृहस्नानेन तु प्रोक्तं मार्जनं तर्पणं तथा ॥ नांतराचमनं प्रोक्तं पश्चादाचम्य शुध्यति ॥ संग्रहे ॥ स्नानमध्ये नाचमनं मार्जनं तर्पणं न च ॥ वस्त्रनिष्पीडनं नैव संकल्परहितं तथा ॥ केचित्तु गृहे स्नाने संकल्पमेव नेच्छंति । तदसत् ॥ अथ गृहस्नानप्रयोगः ॥ देशकालौ संकीर्त्य ॥ शुभपुण्यतिथौ मम वाङ्मनःकृतकर्मदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःस्नानमहं करिष्ये ॥ शरीरं प्रक्षाल्य मानस्तोकेइति मंत्रेण मूर्द्धादिसर्वांगमनुलिप्य प्रक्षाल्य इमम्मे इत्यादिसप्तभिर्मंत्रैर्मार्जयेत् ॥ तत्र मंत्राः ॥ इमम्मेव्वरु० ॥ १ ॥ आपोहिष्ठादित्रिभिः ॥ ४ ॥ इदमापः प्र० ॥ ५ ॥ द्रुपदादि० ॥ ६ ॥ शन्नो देवी० ॥ ७ ॥ ततः ॐ नमोनारायणायेति जपित्वा ॥ गायत्र्या अभिषिच्य ॥ नंदिनी नलिनी सीता मालतीच मलापहा ॥ विष्णुपादाब्जसंभूता गंगा त्रिपथगामिनी॥ भागीरथी भोगवती कावेरी शरयूस्तथा ॥ चर्मण्वती वेदिका च स्नानकाले सदा पठेत् ॥ यन्मया दूषितमिति मंत्रेण शिखां निष्पीड्य शुष्कवासः परिधाय ॥ इति गृहस्नानविधिः ॥ अथाशक्तस्नानविधिः ॥ तत्र भृगुः—कालदोषादसामर्थ्यान्न शक्नोति यदा ह्यसौ ॥ ऋषिभिस्तु तदा ज्ञात्वा मंत्रैर्दृष्ट्वा तु मार्जयेत् ॥ योगी— योसौ विस्तरतः प्रोक्तः स्नानस्य विधिरुत्तमः ॥ असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते ॥ जलाभिमंत्रणं चैव तीर्थ-

स्य परिकल्पनम् ॥ स्नानमंतर्जले चैव मार्जनाचमने तथा॥ अघमर्पणसूक्तेन त्रिरावर्तनमिष्यते ॥ स्नानाचरणमित्येतदुपदिष्टं महात्मभिः॥जाबालिः–अशक्तावशिरस्कं च स्नानमस्य विधीयते ॥ आर्द्रेण वाससा वापि मार्जनं दैहिकं स्मृतम् ॥ अशक्तेन शरीरेण यः स्नानं कुरुते द्विजः ॥ आत्मघातसमं पापमशस्त्रवधमुच्यते ॥ याज्ञवल्क्यः ॥ मांत्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च ॥ वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् ॥ आपोहिष्ठादिभिर्मंत्रैर्मृदालंभं च पार्थिवम् ॥ आग्नेयं भस्मना स्नानं वायव्यं रजसा गवाम् ॥ अद्भिः सातपवर्षाभिः स्नानं तद्दिव्यमुच्यते ॥ वारुणं चावगाहश्च मानसं विष्णुचिंतनम् ॥अवगाहस्नानमात्रम्॥प्रजापतिः–आपोहिष्ठादितिसृभिरिदमापस्तथैव च ॥ द्रुपदादिव शन्नश्च मंत्रस्नानमुदाहृतम् ॥ इत्यशक्तस्नानविधिः

## अथ वस्त्रधारणविधिः ॥

स्नात्वैवं वाससी धौते अच्छिन्ने परिधाय च ॥ ब्रह्मा–ईषद्धूतं नवं श्वेतं सदशं यन्न धारितम् ॥ अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ व्याघ्रपादः–कापायं कृष्णवस्त्रं वा मलिनं केशदूषितम् ॥ जीर्णं नीलं संधितं च पारक्यं मैथुने धृतम् ॥ छिन्नाग्रमुपवस्त्रं च कुत्सितं धर्मतो विधिः ॥ नैकवस्त्रो द्विजः कुर्याद्भोजनं तु सुरार्चनं ॥ योगीयाज्ञवल्क्यः अभावे धौतवस्त्रस्य पट्टसूत्राजिने तथा ॥ कुतपं योगपट्टस्या-

द्विवासायेनवाभवेत् ॥ उत्तरीयं न चेद्विद्यात्परिधानस्य वाससः ॥ अर्द्धेनैव विभागेन प्रकुर्यादुत्तरीयकम् ॥ इति वस्त्रधारणम् ॥ ५६ ॥

## अथ तिलकविधिः।

ललाटे तिलकं कृत्वा संध्याकर्म समाचरेत् ॥ अकृत्व भालतिलकं तस्य कर्म निरर्थकम् ॥ मृद्भस्म चंदनं प्रोक्तं तोयं चैव चतुर्थकम् ॥ स्नात्वा पुंड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना ॥ देवानभ्यर्च्य गंधेन जलमध्ये जलेन तु ॥ कात्यायनः–ऊर्ध्वपुंड्रं मृदा कुर्याद्भस्मना तु त्रिपुंड्रकम् ॥ उभयं चंदनेनैव अभ्यंगोत्सवरात्रिषु ॥ ऊर्ध्वपुंड्रविहीनस्य श्मशानसदृशं मुखम् ॥ अवलोक्य मुखं तस्य श्रीसूर्यमवलोकयेत् ॥ बृहन्नारदीये–स्नाने दाने जपे होमे संध्यास्वाध्यायकर्मसु ॥ ऊर्ध्वपुंड्रविहीनेन तत्सर्वं निष्फलं भवेत् ॥ वसिष्ठः–ऊर्ध्वपुंड्रं त्रिपुंड्रं वा कृत्वा संध्यां समाचरेत् ॥ ललाटे हृदये बाह्वोश्चतुष्पुंड्राणि धारयेत् ॥ मूर्तयो वासुदेवाद्याश्चतुःपुंड्रेषु धारयेत् ॥ कात्यायनः–श्राद्धे यज्ञे जपे होमे वैश्वदेवेऽन्यकर्मसु ॥ धृतत्रिपुंड्रः पूतात्मा मृत्युं जयति मानवः ॥ललाटे हृदये कंठे बाह्वो पृष्टे परेकले ॥ त्रिपुंड्रं भस्मना कुर्यादष्टमंत्रेण चोदितम्॥स्मृतिरत्नावल्याम् ॥ मध्यांगुलित्रयेणैव स्वदक्षिणकरस्य च ॥त्रिपुंड्रं धारयेद्विद्वान्सर्वकल्मषनाशनम् स्मृतिसंग्रहे ॥ ऊर्ध्वपुंड्रं त्रिपुंड्रं वा मध्यशून्यं प्रधारयेत् ॥

न्यासः ॥ वामहस्ते जलं कृत्वा सावित्र्या चाभिमंत्रितम् ॥ तद्विष्णोरितिमंत्रेण मर्दयेन्मृत्तिकां ततः ॥ अथोर्ध्वपुंड्र-प्रयोगः ॥ वामहस्ते जलं कृत्वा गायत्र्याऽभिमंत्र्य तस्मिन्नेव मृत्तिकां मर्दयित्वा ऊर्ध्वपुंड्रं कुर्यात् ॥ ॐ वासुदेवायनमः ललाटे ॥ प्रद्युम्ना यहृदि॥अनिरुद्धाय दक्षिणबाहौ॥ पुरुषोत्तमाय वामबाहौ ॥करौ प्रक्षाल्य ॥ त्रिपुंड्रप्रयोगः ॥ कूर्ममुद्रया विभूतिं प्रगृह्य मानस्तोके इत्यभिमंत्र्य॥आपोहिष्ठेति जलमादाय प्रसद्य भस्मनेति प्रार्थ्य त्रिपुंड्रं कुर्यात् ॥ ॐ भवाय नमः ललाटे ॥ शर्वायनमः हृदये ॥ रुद्राय-नमः कंठे ॥ पशुपतये दक्षिणबाहौ ॥ महादेवाय० पृष्ठे ॥ भीमाय० शिरसि ॥ ईशानाय गले ॥ एवं यथासांप्रदायिकंतिलकं कृत्वा संध्यां कुर्यात् ॥ तत्रादौ प्राणायामविधिः॥ प्रणवव्याहृतीः सप्त गायत्रीं शिरसा सह ॥ त्रिः पठेदायत-प्राणः प्राणायामः स उच्यते ॥ स्कांदे ॥ गायत्रीं शिरसासार्द्धं सप्तव्याहृतिपूर्विकाम् ॥ त्रिजपेत्सदशोंकारः प्राणायामोऽय-मुच्यते ॥ मार्कंडेयपुराणे ॥ प्रथमं साधनं कुर्यात्प्राणाया-मस्य योगवत् ॥ प्राणायननिरोधस्तु प्राणायाम उदाहृतः ॥ आदानरोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसन् ॥ ब्रह्माणं केशवं, शंभुं ध्यायेद्यथानुक्रमात् ॥ योगी ॥ दक्षिणे रेचयेद्वायुंवामे-नापूरितोदरम् ॥ कुंभेन धारयेन्नित्यं प्राणायामं विदुर्बुधाः ॥ पीडयेद्दक्षिणां नाडीमंगुष्ठेन तथोत्तराम् ॥ कनिष्ठानामिका-भ्यां च मध्यमां तर्जनीं त्यजेत् ॥ न्यासः अंगुष्ठतर्जनीभ्यां

तु ऋग्वेदी सामगायनः ॥ अंगुष्ठानामिकाभ्यां तु ग्राह्या सर्वैरथर्वभिः ॥ ऋग्विधाने ॥ नवप्रणवयुक्तेन आपोहिष्ठातृचेनं तु ॥ संवत्सरकृतं पापं मार्जनांते विनश्यति ॥ कात्यायनः ॥ नित्ये देवार्चने होमे संध्यायां श्राद्धकर्मणि ॥ स्नाने दाने तथा ध्याने प्राणायामास्त्रयः स्मृताः ॥ ॐकारस्य ऋषिर्ब्रह्मा परमात्मा च देवता ॥ गायत्री च भवेच्छंदो नियोगः सर्वकर्मसु ॥ व्याहृतीनां तु सप्तानामृषिर्दैवतमुच्यते ॥ छंदांसि विनियोगश्च कथितो धर्मपारगैः ॥ विश्वामित्रो जमदग्निर्भरद्वाजोथ गौतमः ॥ अत्रिर्वसिष्ठः कश्यपो मुनयः सप्त कीर्तिताः ॥ अग्निर्वायुस्तथादित्यो वाक्पतिर्वरुणस्तथा ॥ इंद्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ॥ गायत्र्युष्णिगनुष्टुप्च बृहती पंक्तिरेव च ॥ त्रिष्टुप्च जगती चैव छंदांस्येतानि सप्त वै ॥ एतास्तु व्याहृतीः सप्त यः स्मरेत्प्राणसंयमे ॥ उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥ योगी ॥ अग्निरेव मुखं तस्या विश्वामित्र ऋषिस्तथा ॥ सविता देवता चैव गायत्री त्रिपदा हि सा ॥ ॐआपो ज्योतिरित्येव मंत्रो वै तैत्तिरीयके ॥ तस्य प्रजापतेरार्षं छंदोहीनं यजुः स्मृतम् ॥ ब्रह्माग्निवायुसूर्याश्च देवताः समुदाहृताः ॥ प्राणस्यायमने चैव विनियोग उदाहृतः ॥ यथा पर्वतधातूनां दोषान्दहति पावकः ॥ एवमंतर्गतं पापं प्राणायामेन दह्यते ॥ इति प्राणायामविधिः ॥

## अथ संध्याविधिः ॥

संध्या येन न विज्ञाता संध्या येनानुपासिता ॥ जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते ॥ संध्याया नित्यत्वमुक्तं दक्षः ॥ संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥ यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेदिति श्रुत्वा संपादनेन कर्मांगत्वमुक्तम् ॥ तच्च प्रातःसंध्याया एवेति केचित् ॥ प्रातःसंध्यां सनक्षत्रां मध्याह्नस्नानकर्मणि ॥ सादित्यां पश्चिमां संध्यामुपासीत यथाविधि ॥ अथाचम्य कुशैर्युक्त आसने सपवित्रके ॥ करसंपुटकं कृत्वा संध्यामित्थं समाचरेत् ॥ स्मृत्वा च पुंडरीकाक्षमुपपातकशांतये ॥ ब्रह्मावाप्त्यै वयं प्रातः संध्यां वंद्यामुपास्महे ॥ इत्थं कृत्वा तु संकल्पं कुशानादाय दक्षिणे ॥ नद्यां नदीस्थतोयैश्च गृहे वामकरस्थितैः ॥ त्रिभिर्व्याहृतिभिर्मंत्रैः प्रत्येकं मिलितैश्च तैः ॥ गायत्र्या तु ततः कुर्यादभिषेकं तु तज्जलैः ॥ त्यजेद्भूर्भुवःस्वरिति गायत्र्या च शिखां स्पृशेत् ॥ दर्भेण सोदकेनैव दद्यादासनमात्मनः ॥ पृथ्वि त्वया० ॥ इति ब्रह्ममुखैर्मंत्रैरभिषिंचंति ये द्विजाः ॥ ते ब्रह्मसदनं यांति तस्मात्तैः परिमार्जयेत् ॥ ॐ भूर्विन्यस्य हृदये भुवः शिरसि विन्यसेत् ॥ स्वरितीदं शिखायां तु गायत्र्याः प्रथमं पदम् ॥ विन्यसेत्कवचे विद्वान्द्वितीयं नेत्रयोर्न्यसेत् ॥ तृतीयेनास्त्रविन्यासेऽप्येष न्यासोऽघनाशनः ॥ अकारं नाभिदेशे तु उकारं हृदये न्यसेत् ॥ मकारं विन्यसेन्मूर्ध्नि एष न्यासो विमुक्तिदः ॥ भूर्लोकं पादयोर्न्यस्य भुव-

लोकं तु जानुनि ॥ स्वर्लोकमूरुदेशे तु जठरे तु महस्तथा ॥ जनलोकं कंठदेशे मुखबिंबे तपस्तथा ॥ सत्यं शिरसि विन्यस्य एप न्यासो महाफलः ॥ गायत्र्याः फलदा वर्णा न्यस्ताः स्युः सर्वकर्मसु ॥ तकारं विन्यसेत्तस्मात्पादांगुष्ठद्वयोर्द्विजः ॥ सकारं गुल्फदेशे तु विकारं जंघयोर्न्यसेत् ॥ तुकारं जानुदेशे तु वकारमूरुदेशके ॥ रेकारं विन्यसेद्गुह्ये णिकारं लिंगके न्यसेत् ॥ यकारं कटिदेशे तु भकारं नाभिमंडले ॥ गोकारं जठरे न्यस्य देकारं स्तनयोर्न्यसेत् ॥ वकारं हृदये प्राज्ञः स्यकारं कंठ एव च ॥ धीकारं वदने विप्रो मकारं तालुके न्यसेत् ॥ हिकारं नासिकाग्रे तु धिकारं नयनद्वये ॥ योकारं तु भ्रुवोर्मध्ये द्वितीयं यो ललाटके॥ नकारं पूर्ववक्त्रे तु प्रकारं दक्षिणानने ॥ चोकारं पश्चिमे वक्त्रे दकारं चोत्तरे मुखे॥विन्यसेन्मूर्द्ध्नि याकारं व्यंजनं सर्वतो न्यसेत्॥आपो गुह्ये न्यसेज्ज्योतिश्चक्षुष्यथ रसो मुखे ॥ अमृतं जानुनी ब्रह्म हृदये भूः पदद्वये ॥ भुवर्नाभौ ललाटे स्वरोंकारं मूर्द्ध्नि विन्यसेत् ॥ एवं कृत्वाक्षरन्यासं सर्वपापैः प्रमुच्यते ॥ आवाहनं च गायत्र्याः प्राणायामं समभ्यसेत् ॥ गायत्रीं त्र्यक्षरां बालामित्यादिप्रयोगे स्पष्टीकृतम् ॥ त्र्यक्षरां प्रणवात्मिकामित्यर्थः ॥ अथो नमोभगवते वासुदेवायेति मंत्रः ॥ ७ ॥ परिक्षिप्य जलं मूर्ध्नि समंतात्प्राणमभ्यसेत् ॥ रक्षार्थं वारि चाऽऽत्मानं परिषिच्य समंततः ॥

मंत्रस्य ऋषिर्नारायणः स्मृतः ॥ सूर्यो देवोऽनुष्टुप्छंदो नियोगः प्राशने मतः ॥ प्रातरनेन मंत्रेण अभिमंत्र्य जलं पिबेत् ॥ पीत्वापस्तु द्विराचम्य ततो मार्जनमाचरेत् ॥ सूर्यश्च मेति मंत्रेण प्रातराचमनं भवेत् ॥ आपः पुनंतु मध्यान्हे सायमग्निश्चमेतिच ॥ आपोहिष्ठेति तिसृभिः सिंधुद्वीप ऋषिः स्मृतः ॥ आपो देवता गायत्री छंदो मार्जनकर्मणि ॥ आपोहिष्ठेतिं सूक्तेन दर्भैर्मार्जनमाचरेत् ॥ पादांते मार्जनं कुर्यात्प्रत्यृचं वा समाहितः ॥ तृचस्यांतेऽथवा कुर्याद्दपीणामीदृशं मतम् ॥ भूमौ शिरसि चाकाशे आकाशे भुवि मस्तके ॥ मस्तके च तथाकाशे भूमौ च नवधा क्षिपेत् ॥ नद्यां तीर्थे ह्रदे वापि भाजने मृन्मयेपि वा ॥ सौवर्णे राजते ताम्रे पात्रे वा दारुसंभवे ॥ कृत्वापो वामहस्ते वा संध्योपासनमाचरेत् ॥ धाराच्युतेन तोयेन मार्जनं स्याद्विगर्हितम् ॥ पितरो न प्रशंसंति देवता ऋषिसंमताः ॥ मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारया ॥ कुर्याचेद्वारिधाराभिस्तत्सर्वं निष्फलं भवेत्॥सुमित्रिया दुर्मित्रिया द्वे यजुषी प्रजापतिः ॥ ऋषिरापो देवता च आदानक्षेपयोर्मते ॥ सुमित्रियेति चाऽऽदाय जलं दुर्मित्रिया क्षिपेत् ॥ जंतुहीने स्थले विप्र शत्रुमेत द्विषंप्रति ॥ द्रुपदा दिवेति मंत्रस्य प्राजापत्याश्च शारदाः ॥ ऋषिरापो देवतानुष्टुप्छंदः प्रक्षेपकर्मणि ॥ जलपूर्णं तु चुलकं नासिकाग्रे विधृत्य च ॥ प्राणं निरुध्य द्रुपदां पठित्वांतर्जले क्षिपेत् ॥ ऋतं च सत्यं चेत्यघमर्षणे ऋषि रुच्यते ॥

भावभृथादेवोनुष्टुप्छंदः प्रक्षेपकर्मणि ॥ ऋतं चेति मंत्रेण सलिलं पूर्ववत्क्षिपेत् ॥ पश्चाज्जलैः स्पृशेन्नासां लोचनं तु सकर्णकम् ॥ गृहीत्वा पाणिना वारि स्वशाखोक्तमृचं जपेत् ॥ विभृयान्नासिकाग्रे तु निरुद्धः प्राणमारुतः ॥ कराभ्यां तोयमादाय गायत्र्या चाऽभिमंत्रितम् ॥ आदित्याभिमुखस्तिष्ठंस्त्रिः क्षिपेत्संध्ययोर्द्वयोः ॥ मध्याह्ने तु सकृदेव क्षेपणीयं द्विजातिभिः ॥ उदकं प्रक्षिपेद्यस्मात्तत्कारणमतः शृणु ॥ त्रिंशत्कोट्यो महावीरा मंदेहा नाम राक्षसाः ॥ कृतघ्ना दारुणाः शूराः सूर्यमिच्छंति खादितुम् ॥ ततो देवगणाः सर्वे ऋषयश्च तपोधनाः ॥ उपासते सदा संध्यां प्रक्षिपंत्युदकांजलिम् ॥ दह्यंत्यनेन दैत्या वै वज्रीभूतेन वारिणा ॥ एतस्मात्कारणाद्विप्राः संध्यां नित्यमुपासते ॥ एकं शस्त्रविनाशाय एकं वाहननाशने ॥ असुराणां वधायैकं दद्यादर्घ्यत्रयं द्विजः ॥ असुराणां वधादूर्ध्वं प्रायश्चित्तार्घ्यसंयुतम् ॥ तस्मान्न लंघयेत्संध्यां सायं प्रातर्द्विजः सदा ॥ उल्लंघयति यो मोहात्स याति नरकं ध्रुवम् ॥ उदयास्तमितादूर्ध्वं यावत्स्याद्घटिकात्रयम् ॥ तावत्संध्यामुपासीत प्रायश्चित्तमतः परम् ॥ हस्ताभ्यां स्वस्तिकं कृत्वा प्रातस्तिष्ठेद्दिवाकरम् ॥ मध्याह्ने तु ऋजुं बाहुं सायं मुकुलितौ करौ ॥ उद्वयं च तथोदुत्यं प्रस्कण्वोऽत्र ऋषिः स्मृतः ॥ सविता देवता छंदो नुष्टुब्गायत्र्यनुक्रमात् ॥ चित्रमांगिरसः कुत्स ऋषिः सूर्यश्च देवता ॥ त्रिष्टुप्छंदश्चक्षुरिति दध्यङ्ङाथर्वणो मुनिः ॥

सूर्यश्च देवता छंदःपरोष्णिगिति च स्मृतः ॥ नियोग एषां मंत्राणामुपस्थाने रवेर्मतः ॥ अथोद्वयं तमुदुत्यं चित्रं तच्चक्षुरित्यपि ॥ तिष्ठेद्दिवाकरं प्रातः सायं मध्यान्ह एव च ॥ तेजोऽसीतिपरमेष्ठी प्रजापतिर्ऋषिः स्मृतः ॥ अयंदेवश्च गायत्री आवाहन नियोगकम् ॥ तेजोऽसीति जपेन्मंत्रं गायत्र्याऽऽवाहने द्विजः ॥ ऋषिस्तुरीयो विमलः परमात्मा च देवता ॥ गायत्री च भवेच्छंदो नियुक्तं मोक्षकांक्षणे ॥ गायत्र्येकपादित्यादि गायत्र्याः प्रार्थनां चरेत् ॥ नमस्त इति तुर्याय नमस्कृत्य जपेद्यतः ॥

## अथ जपलक्षणम् ॥

ॐ कारं पूर्वमुच्चार्य भूर्भुवः स्वस्तथैव च ॥ गायत्री प्रणवश्चांते जप एवमुदाहृतः ॥ ध्यायेत्तु मनसा मंत्रं जिह्वोष्ठौ न विचालयेत् ॥ न कंपयेच्छिरोऽगानि दंतान्नैव प्रकाशयेत् ॥

## तत्र कारणम् ।

यक्षरक्षः पिशाचाश्च सिद्धविद्याधरा गणाः ॥ यस्मात्प्रभावं गृण्हति तस्माद्गुप्तं तु कारयेत् ॥ उपांशुलक्षणम् ॥ विना शब्दं जपो यस्तु चलज्जिह्वद्विजच्छदः ॥ उपांशुं तं जपं प्राहुर्मनसा मानसं बुधाः ॥ पूर्वां संध्यां जपंस्तिष्ठेद्गायत्रीमार्कदर्शनात् ॥ जपमालालक्षणम् ॥ अरिष्टं पुत्रजिद्बश्च शंखः पद्मो मणिस्तथा ॥ कुशग्रंथिश्च रुद्राक्षा उत्तमं चोत्तरोत्तरम् ॥ जपसंख्यामाह ॥ अष्टोत्तरशतं कुर्याच्चतुः पं-

चात्मिकापि वा ॥ अष्टाविंशति वा कुर्यात्ततो नैवाधमा हि सा ॥ जपसंख्या फलश्रुतिः ॥ सप्तावृत्या पुनात्यन्ये दशभिः प्रापयेद्दिवम् ॥ अष्टाविंशति साभ्यस्ता नयाति शंकरालयम् ॥ अष्टोत्तरशतं जप्त्वा तारयेज्जन्मसागरात् ॥ व्यासः ॥ दशभिर्जन्मजनितं शतेन च पुराकृतम् ॥ त्रिजन्मजं सहस्रेण गायत्री हंति किल्बिषम् ॥ वायुभक्षो दिवा तिष्ठेद्रात्रीं नीत्वाप्सु सूर्यदृक् ॥जप्त्वा सहस्रं गायत्र्याः शुद्धिर्ब्रह्मवधादृते ॥ सर्वेषामेव पापानां संकरे समुपस्थिते ॥ दशसाहस्रिकोऽभ्यासो गायत्र्याः शोधकः परः ॥ गोघ्नः पितृघ्नो मातृघो भ्रूणहा गुरुतल्पगः ॥ ब्रह्मस्वदायहारी च यश्च विप्रः सुरां पिबेत् ॥ स गायत्र्याः सहस्रेण पूतो भवति मानवः ॥ एतन्मानसवाचिकपापविषयम् ॥ कायिके मप्राह्यश्चित्त श्रवणात्॥ जपनिषेधः॥नोदकस्थो जपेत्प्राज्ञो गायत्रीं वेद मातरम् ॥ नार्द्रवासा जपं कुर्याद्धोमं दानं प्रतिग्रहम् ॥ सर्वं तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥ न जपेत्पादमाक्रम्य नचैव हि तथा करौ ॥ मनःसंहरणं शौचं मौनं मंत्रार्थचिंतनम् ॥ अव्यग्रत्वमनिर्वेदो जपसंततिहेतवः ॥ आसनान्याह ॥ कौशेयं कंबलं चैव अजिनं पट्टमेव च ॥ दारुजं तालपत्रं वा आसनं परिकल्पयेत् ॥ अथ जपगणनाप्रकारः ॥ अनामिकाया यो मध्यस्तस्मादधः क्रमेण तु ॥ तर्जन्यादौ जपांते च ह्यक्षमाला करे स्थिता ॥ मध्यमादिद्वयं पर्व जपकाले च वर्जयेत् ॥ एवं मेरुं विजानीयाद्भाषितं ब्रह्मणा स्वयम्॥ अंगुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलंघने ॥ असंख्यातं तु यज्जप्तं

तत्सर्वं निष्फलं भवेत् ॥ एकैकमणिमंगुष्ठेनाकर्षन्प्रजपेन्मनुम् ॥ मेरौ तु लंघिते देवि न मंत्रः फलभाग्भवेत् ॥ विश्वत श्चक्षुरित्यृषिर्भौवनेयोस्य देवता ॥ विश्वकर्मा त्रिष्टुप्छंदोप स्थाने विनियोगकः ॥ इत्थं स्मृत्वा ऋषिच्छंदो विश्वतश्चक्षुरित्यृचम् ॥ जप्त्वा प्रदक्षिणं कुर्यादेकं चक्रमिति द्विजः ॥ उपविश्यासने पश्चात्कुर्यात्संपुटितौ करौ ॥ देवा गात्विति मंत्रस्य मनसस्पतिरित्यृषिः ॥वातो देवो विराट्छंदो योगो जपविसर्जने ॥ करे नीरं समादाय देवा गात्विति मंत्रतः ॥ निवेदयेज्जपं पूष्णे प्रयोगस्तत्र कल्पते ॥ प्रातः संध्यांगभूतेन गायत्रीजपनेन च ॥ साष्टेन शतसंख्येन ब्रह्मात्मा प्रीयतां रविः ॥ सवित्रे नम इत्युक्त्वा गायत्र्येकपदीति वै ॥ उपस्थाय च गायत्रीं भूर्भुवःस्वर्विसर्जनम् ॥ यदक्षरमिति प्रार्थ्य ध्यायेद्देवीं द्विजोत्तमः ॥ उत्तरे शिखरेत्यादि पठित्वा तां विसर्जयेदिति संध्याविधिः ॥ अथ संध्याकालमाह ॥ उत्तमा तारकोपेता मध्यमा लुप्ततारका ॥ अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ॥ उदयात्प्राक्तनी संध्या घटिकात्रयमुच्यते ॥ सायंसंध्या त्रिघटिका अस्तादुपरिभास्वतः ॥ उदयास्तमयादूर्ध्वं यावत्स्याद्घटिकात्रयम् ॥

## अथ प्रातःसंध्याप्रयोगः ॥

कुशासने उपविश्य दर्भपाणिः सन्संध्यावंदनं कुर्यात् ॥ पूर्ववदाचम्य पूर्वोक्ताचमनासंभवे केशवादि त्रिः पीत्वा हस्तं प्रक्षाल्य श्रोत्रं स्पृशेत् ॥ ततः शिखाबंधनम् ॥ ॐ ऊ-

र्ध्वकेशि विरूपाक्षि मांसशोणितभोजने ॥ तिष्ठदेविशिखाबंधे चामुंडे चापराजिते ॥ विष्णोर्नामसहस्राणि शिखाबंधं करोम्यहम् ॥ मानस्तोकेति मंत्रस्य कुत्स ऋषिः जगतीछंदः एको रुद्रो देवता शिखाबंधने विनियोगः ॥ ॐ मानस्तोके० महे ॥ ततः देशकालौ संकीर्त्य ॥ अपवित्रः० ॥ ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसंध्योपासनमहं करिष्ये ॥ ॐकारस्य ब्रह्मा ऋषिः गायत्री छंदः परमात्मा देवता सर्वकर्मारंभे विनियोगः ॥ भूरादिव्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुप्छंदांसि अग्निवायुसूर्या देवता अभिषेके विनियोगः ॥ ॐ भूः ॐ भुवः ॐ स्वः ॐ तत्सवितुर्वे० ॥ प्रतिमंत्रं दक्षिणेन पाणिना कुशानादाय नद्युत्थतोये गृहे च वामकरस्थिततोयैरात्मानं अभिषिंचयेत् ॥ पृथ्वीति मंत्रस्य मेरुपृष्ठ ऋषिः सुतलं छंदः कूर्मो देवता आसने विनियोगः ॥ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ अपसर्पंतु ते भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया ॥ अपक्रामंतु भूतानि पिशाचाः सर्वतोदिशम् ॥ सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥ इति द्विमंत्रेण भूतान्युत्सार्य ॥ ततो दक्षिणेन पाणिना कुशानादाय तोयैर्वक्ष्यमाणमंत्रैः प्रतिमंत्रमात्मानमभिषिंचेत् ॥ ॐ भूः पुनातु ॐ भुवः पुनातु ॐ स्वः पुनातु ॐ महः पुनातु ॐ जनः पुनातु ॐ तपः पुनातु ॥ ॐ सत्यं पुनातु ॐ तत्सवितुर्वरे० दयात्सर्वं पु-

नातु ॥ ततोन्यासः ॥ अंगुष्ठाग्रे तु गोविंदाय नमः ॥ तर्जन्यां महीधराय नमः॥मध्यमायां हृषीकेशाय नमः ॥ अनामिकायां त्रिविक्रमाय नमः ॥ कनिष्ठिकायां विष्णवे नमः॥ करमध्ये माधवाय नमः ॥ करपृष्ठे जनार्दनाय नमः ॥ अथ षडंगन्यासः ॥ ॐ भूः हृदयाय नमः ॥ ॐ भुवः शिरसे स्वाहा ॥ ॐ स्वः शिखायै वषट् ॥ ॐ तत्सवितुर्वरेण्यं कवचाय हुं ॥ ॐ भर्गो देवस्य धीमहि नेत्रत्रयाय वौषट् ॥ ॐ धियोयो नः प्रचोदयात् अस्त्राय फट् प्रणवन्यासः ॥ॐ-अकारं नाभौ ॥ ॐ उकारं हृदये ॥ ॐ मकारं मूर्ध्नि ॥ व्याहृतिन्यासः ॥ ॐ भूः पादयोः ॐ भुवःजान्वोः ॐ स्वः-ऊर्वोः ॥ ॐ महः जठरे ॥ ॐजनःकंठे ॥ ॐ तपः मुखे ॥ ॐ सत्यं शिरसि ॥ गायत्र्याक्षरन्यासः ॥ ॐ तकारं पादांगुष्ठयोः ॥ त्सकारं गुल्फयोः ॥ विकारं जंघयोः ॥ तुकारं जान्वोः ॥ वकारं ऊर्वोः ॥ रेकारं गुदे ॥ णिकारं लिंगे ॥ ॐ यकारं कट्याम् ॥ भकारं नाभौ ॥ र्गोकारं उदरे ॥ देकारं स्तनयोः ॥ वकारं हृदये ॥ स्यकारं कंठे ॥ धीकारं मुखे मकारं तालुदेशे ॥ हिकारं नासिकाग्रे ॥ धिकारं नेत्रयोः ॥ योकारं भ्रुवोर्मध्ये ॥ द्वितीयं योकारं ललाटे ॥ नकारं पूर्वमुखे ॥ प्रकारं दक्षिणमुखे ॥ चोकारं पश्चिममुखे ॥ दकारं उत्तरमुखे ॥ ॐयाकारं मूर्ध्नि ॥ व्यंजनं सर्वत्र ॥ गायत्रीशिरोन्यासः ॥ ॐआपो गुह्ये ॥ ज्योतिश्चक्षुषोः॥ रसोमुखे ॥ अमृतं जान्वोः ॥ ब्रह्म हृदये ॥ भूःपादौ ॥ भुवःनाभौ ॥ स्वर्ल-

लाटे ॥ ॐकारंशिरसि ॥ अथ ध्यानम् ॥ गायत्रीं त्र्यक्षरां बालां साक्षसूत्रकमंडलुम् ॥ रक्तवस्त्रां चतुर्वक्त्रां हंसवाहनसंस्थिताम् ॥ ब्रह्माणीं ब्रह्मदैवत्यां ब्रह्मलोकनिवासिनीम् ॥ आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि ॥ गायत्रि छंदसां मातर्ब्रह्मयोने नमोस्तुते ॥ ततःप्राणायामः॥ ॐकारस्यब्रह्मा ऋषिः परमात्मा देवता देवी गायत्री छंदः॥सप्तानां व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः ॥ अग्निवायुसूर्यबृहस्पतिवरुणेंद्रविश्वेदेवा देवताः गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छंदांसि तत्सवितुरित्यस्य विश्वामित्रऋषिः गायत्री छन्दः सविता देवता॥आपो ज्योतिरित्यस्य प्रजापतिर्ऋषिः यजुश्छंदः ब्रह्माग्निर्वायुः सूर्यो देवताः सर्वेषां प्राणायामे विनियोगः ॥ ॐनमो भगवते वासुदेवायेति मंत्रेणात्मानं परितः प्रदक्षिणमुदकं प्रक्षिपेत् ॥ निमीलितनयनो मौनी अंगुष्ठानामिकाकनिष्ठिकाभिर्नासिकां धृत्वा ॥ ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्व० दयात् ॥ ॐ आपो जोती रसोमृतं ब्रह्म भूर्भुवः स्वरोम् ॥ इति जपन्नाभौ ब्रह्माणं रक्तवर्णं चतुर्भुज ध्यायेत् ॥ वामनासापुटेन वायुं परयेत् ॥ ततः भूरित्यादि पठन्हृदये विष्णुं चतुर्भुजं श्यामवर्णं ध्यायेत् ॥ नासापुटद्वयं धृत्वा वायुं कुंभयेत्॥ पुनरपि भूरित्यादि पठँल्ललाटे श्वेतवर्णं त्रिनेत्रं ध्यायेत् ॥ दक्षिणनासापुटेन तं वायुं रेचयेत् ॥ अनेन प्रकारेण एकः

प्राणायामो भवति ॥ एवं त्रयः प्राणायामाः प्रतिसंध्यं कार्याः ॥ ततः सूर्यश्चमेति मंत्रस्य नारायण ऋषिः अनुष्टुप्छंदः सूर्यो देवता जलाभिमंत्रणे विनियोगः ॥ ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षंतां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुंपतु यत्किंचिद्दुरितं मयि इदमहममृत योनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ अनेन मंत्रेण जलमभिमंत्र्य पिबेत् ॥ ततो द्विराचम्य ततः कुशोदकैर्मार्जयेत् ॥ आपोहिष्ठेति तिसृणां सिंधुद्वीपऋषिः गायत्रीछंदः आपो देवता मार्जने विनियोगः ॥ ॐ आपोहिष्ठा मयो भुवस्ता न ऊर्जे दधातन ॥ महेरणाय चक्षसे ॥ १ ॥ ॐ योवः शिवतमो रसस्तस्य भाजयते हनः॥उशतीरिव मातरः ॥२॥ इति द्वाभ्यां शिरसि मार्जयेत् ॥ ॐ तस्मा अरंगमामवो यस्य क्षयायजिन्वथ ॥ इति मंत्रेण भूमौ जलं निक्षिपेत् ॥ ॐ आपो जन यथा च नः इत्यनेन पुनः शिरसि मार्जयेत्॥ सुमित्रिया इत्यस्य प्रजापतिर्ऋषिः यजुश्छंदः आपो देवता अंबुग्रहणे विनियोगः॥ ॐ सुमित्रियानऽआपऽओषधयः संतु ॥ अनेन मंत्रेणांजलिं गृहीत्वा॥ दुर्मित्रिया इत्यस्य प्रजापतिर्ऋषिः यजुश्छंदः आपो देवता अंबुप्रक्षेपे विनियोगः ॐ दुर्मित्रियास्तस्मै संतुयोस्मान्द्वेष्टि यं च वयं द्विष्मः॥

इत्यनेन प्रतिनिर्षिंचेत् ॥ जलं जंतुरहिते भूप्रदेशे प्रक्षिपे दित्यर्थः ॥ द्रुपदा दिवेति जलमवजिघ्रेत् ॥ द्रुपदादिवेति मंत्रस्य कोकिलो राजपुत्र ऋषिः अनुष्टुप्छंदः आपो देवता जलावघ्राणे विनियोगः ॥ ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ॥ पूतं पवित्रेणेवाज्यमापः शुन्धंतु मैनसः ॥ ऋतं चेति तृचस्याघमर्षण ऋषिः अनुष्टुप्छंदः भावभृथो देवता अंबुप्रक्षेपे विनियोगः ॥ ॐ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ॥ ततो रात्र्य जायत ततः समुद्रो अर्णवः ॥ १ ॥ समुद्रादर्णवादधिसंवत्सरो अजायत ॥ अहोरात्राणि विदधद्विश्वस्य मिषतोवशी ॥ २ सूर्या चंद्रमसौ धाता यथा पूर्वमकल्पयत् ॥ दिवंचपृथिवीं चांतरिक्षमथो स्वः ॥ ३ ॥ इत्यनेन त्यृचेन करस्थं जलं वामभागे भूमौ प्रक्षिपेत् ॥ ततः सकृदाचम्य ॥ ततोऽर्घत्रयं दद्यात् ॥ यथा ॥ सूर्याभिमुखः कराभ्यां तोयमादाय ॥ ॐ कारस्य ब्रह्मा ऋषिः गायत्री छंदः परमात्मा देवता ॥ भूरित्यादिव्याहृतीनांप्रजापतिर्ऋषिःगायत्र्युष्णिगनुष्टुप्छंदांसिअग्निर्वायुःसूर्यो देवता ॥ तत्सवितुरित्यस्य विश्वामित्र ऋषिः गायत्री छंदः सूर्यो देवता अर्घ्यदाने विनियोगः ॥ सप्रणवव्याहृतिपूर्वां गायत्रीं पठित्वा ॥ प्रातः संध्याब्रह्मस्वरूपिश्रीसवितृ सूर्यनारायणायेदमर्घ्यं दत्तं न मम ॥ अर्घ्यांते उदकेन द-

क्षिणनासाचक्षुःकर्णस्पर्शः ॥ एवं त्रिवारं कृत्वा ॥ दक्षिण-पाणिना गृहीतजलेनासावादित्यो ब्रह्मेति मंत्रेणात्मानं परि-षिंचन्प्रदक्षिणं परिक्रम्य द्विराचामेत् ॥ तत उत्थाय ॥ भूम्य लग्नएकपार्ष्णिः स्वस्तिकाकारपाणिः सूर्योदयाभिमुखो वक्ष्य माणचतुर्मंत्रैः सूर्यमुपतिष्ठेत् ॥ उद्वयमित्यस्य प्रस्कण्व ऋषिः अनुष्टुप्छंदः उदुत्यमित्यस्य प्रस्कण्व ऋषिःगायत्री छंदः ॥ चित्रं देवानामित्यस्य कुत्सांगिरस ऋषिः त्रिष्टुप्छंदः तच्चक्षु रितिदध्यङ्ङाथर्वण ऋषिःउष्णिक् छंदःसर्वेषां सूर्यो देवता सू-र्योपस्थाने विनियोगः ॥ ॐ उद्वयंतमसस्परिस्वः पश्यन्त उत्तरम् ॥ देवं देवत्रा सूर्यं मगन्मज्योति रुत्तमम् ॥ १ ॥ उदुत्यं जातवेदसं देवं वहंति केतवः ॥ दृशे विश्वाय सू-र्यम् ॥ २ ॥ चित्रं देवानामुदगानीकं चक्षुर्मित्रस्य वरुण स्याग्नेः ॥ आप्रा द्यावा पृथिवी अंतरिं क्षश्सूर्य्य आत्मा जग तस्तस्थुषश्च ॥ ३ ॥ ॐतच्च क्षुर्देवहितंपुरस्ताच्छुक्रमुच्च रेत् ॥ पश्येम शरदः शतं जीवेम शरदः शतश्शृणुयाम शरदः शतम् प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥४॥ तेजोसीतिपरमेष्ठी प्रजापतिर्ऋषिः गायत्री छंदः आज्यं देवता गायत्र्यावाहने विनियोगः ॥ ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि प्रियन्देवा नामनाधृष्टंदेवयजनमसि ॥ तुरीयपदस्य विमलऋषिःगायत्री

छंदः परमात्मा देवता गायत्र्युपस्थाने विनियोगः ॥ गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे ॥ नमस्ते तुरीयाय दर्शताय पदाय परोरजसे सावदोम् ॥ नमस्कारः ॥ पुनः षडंगन्यासः ॥ अग्निर्मुखं ब्रह्मा शिरः रुद्रः शिखा विष्णुर्हृदयम् सांख्यायनगोत्रा पद्स्वरा पिंगाक्षी त्रिपदा गायत्री सर्वपापक्षयार्थे जपे विनियोगः ॥ ततोध्यानम् मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैः पंचभिर्युक्तामिंदुनिबद्धरत्नमुकुटां तत्वार्थवर्णात्मिकाम् ॥ गायत्रीं वरदाभयां कुशगदाः शूलं कपालं गुणं शंखं चक्रमथारविंदं युगलं हस्तैर्वहंतीं भजे ॥ अथ मुद्राः ॥ सुमुखं संपुटं चैव विततं विस्तृतं तथा ॥ द्विमुखं त्रिमुखं चैव चतुःपंचमुखं तथा ॥ षण्मुखोऽधोमुखं चैव व्यापकांजलिकं तथा॥ शकटं यमपाशं च ग्रथितं सन्मुखोन्मुखम् ॥ प्रलंबमुष्टिकं चैव मत्स्यः कूर्मो वराहकः ॥ सिंहाक्रांतं महाक्रांतं मुद्गरं पल्लवं तथा॥एता मुद्रा न जानाति गायत्री निष्फला भवेत् ॥ ततो गायत्रीजपं कुर्यात् ॥ व्यासः ॥ अच्छिन्नपादा गायत्री जपं कुर्वंति ये द्विजाः ॥ अधोमुखास्तु तिष्ठंति कल्पकोटिशतैरपि ॥ छिन्नपादा तु गायत्री ब्रह्महत्यां व्यपोहति ॥ अच्छिन्नपादा गायत्री ब्रह्महत्यां प्रयच्छति ॥ तत्सवितुर्वरेण्यं तेजो ध्यायेमहि योस्माकं कर्माणि प्रेरयति इति गायत्र्या मंत्रार्थं स्मृत्वा अष्टोत्तरशतजपं कुर्यात् ॥ पुनरपि षडंगन्यासः ॥ सुरभिर्ज्ञानवैराग्यं योनिः कूर्मोऽथ पंकजम् ॥ लिंगं

निर्वाणमुद्राष्टौ जपांते च प्रदर्शयेत्॥विश्वतश्चक्षुरिति मंत्रस्य विश्वकर्मा भौवन ऋषिः त्रिष्टुप् छंदः विश्वकर्मा देवता सूर्यं प्रदक्षिणायां विनियोगः॥ वि॒श्वत॑श्चक्षुरु॒त वि॒श्वतो॑मुखो वि॒श्वतो॑बाहुरु॒तवि॒श्वत॑स्पात् ॥ सम्बा॒हुभ्यां॒ धम॑ति॒ संपत॑त्रै॒र्द्यावा॒भूमी॑ ज॒नय॑न्दे॒व एकः॑॥एकं चक्रं रथे यस्य दिव्यं कनक भूषितम् ॥ स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ॥ इत्यनेन सूर्यं नमस्कुर्यात्॥देवा गात्विति मंत्रस्य मनसस्पतिर्ऋषिः विराट्छंदः वातो देवता जपविसर्जने विनियोगः॥ ॐ देवा गातु विदो गातु वित्वा गातुमित ॥ मनसस्पत इमन्देवयज्ञ॑ स्वाहा वातेधाः ॥ इत्यनेनाष्टोत्तरशतसंख्याकेन गायत्रीजपेन प्रातःसंध्यांगभूतेन श्रीभगवान्ब्रह्मस्वरूपी सविता प्रीयताम् ॥ ततः संध्यां प्रार्थयेत् ॥ यदक्षरपदभ्रष्टं मात्राहीनंतु यद्भवेत् ॥ तत्सर्वं क्षम्यतां देवि काश्यपप्रियवादिनि ॥ ततः संध्याविसर्जनम्॥उत्तरे शिखरे देवि भूम्यां पर्वतमूर्द्धनि ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम् ॥ उदकप्रक्षेपः ॥ सवित्रे नमः ॥ संध्यायै नमः ॥ पूर्वादिदिक्षु इंद्राय नमः ॥ अग्नयेनमः ॥ यमायनमः॥ निर्ऋतये नमः ॥ वरुणाय नमः ॥ वायवे नमः॥ सोमाय नमः॥ईशानाय नमः॥ऊर्ध्वायै दिशे ब्रह्मणे नमः ॥ अवाच्यै दिशे अनंताय नमः॥ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे॥ त्रयीमयाय त्रिगुणात्मधारिणे विरंचिनारायणशंकरात्मने ॥ आका

शात्पतितं तोयं यथा गच्छति सागरम् ॥ सर्वदेवनमस्कारः केशवं प्रतिच्छति ॥ इति नमस्कृत्य गुरुमभिवादयेत् ॥ तद्यथा ॥ स्वस्तिकाकारहस्ताभ्यां कर्णौ स्पृष्ट्वा अमुकगोत्रः अमुकप्रवरः अमुकशर्माहं भो गुरो त्वामऽभिवादयामि ॥ यस्य स्मृत्या॰ततः आचमनं कुर्यात्

## इति प्रातः संध्याप्रयोगः ।

संध्याकाललोपप्रायश्चित्तमाह॥संध्याकाले व्यतिक्रांते मंत्रं जप्त्वा पुनर्मनः॥ऋचं वाचं तृचं जप्त्वा ततः संध्यामुपासयेत् ॥ शातातपे ॥ संध्याकाले त्वतिक्रांते स्नात्वाचम्य यथाविधि ॥ जपेदष्टशतं देवीं ततः संध्यां समाचरेत् ॥ मदनपारिजाते ॥ कालातिक्रमणे चैव चतुर्थार्घ्यं प्रदापयेत् ॥ याज्ञवल्क्यः ॥ सर्वावस्थोऽपि यो विप्रः संध्योपासनतत्परः॥ ब्राह्मण्याच्च न हीयेत अन्यजन्मगतोऽपिवा ॥

त्पुण्यसाधनम् ॥ अशक्तौ निर्जले देशे मृतौ जाते च सूतके जपेच्च मानसीं संध्यां कुशवारिविवर्जितमिति ॥ संध्यायां मनसा शक्त्या मंत्रानुच्चारयेद्द्विजः ॥ प्राणायामं विना सर्वानधः प्राणान्नियम्य च ॥ मार्जनादि भवेत्सर्वं न वा कार्यं हि मार्जनम् ॥ उच्चार्य वाचा गायत्रीं दद्यादर्घ्यांजलीनपि ॥ अष्टाविंशतिकृत्वोऽत्र गायत्रीं मनसा जपेत् ॥ जपमालाधारण विधिः ॥ अनामामध्यमाक्रम्य जपं कुर्याच्च मानसम् ॥ तर्जनीं तु समाक्रम्य जपं नैव तु कारयेत् ॥ एकैकमणिमंगुष्ठेनाकर्षन्प्रजपेन्मनुम् ॥ मेरौ तु लंघिते देवि न मंत्रः फलभाग्भवेत् ॥ प्रमादात्पतिते सूत्रे जपेदष्टोत्तरं शतम् ॥ पादयोः पतिते तस्मिन्प्रक्षाल्य द्विगुणं भवेत् ॥ योगी ॥ गायत्रीं यो न जानाति वृथा तस्य परिश्रमः ॥ एकतश्चत्वारोवेदा गायत्री चैकतः समः ॥ यमाः ॥ न तथा वेदजाप्येन पापं निर्दहति द्विजः ॥ यथा जपेन गायत्र्याः सर्वपापैः प्रमुच्यते ॥ मनुः ॥ गायत्री मंत्रसारोपि वरं विप्रःसुयंत्रितः ॥ जपमालोक्तातंत्रांतरे ॥ अंगुलीगणनादेकं रेखयाष्टगुणं भवेत् ॥ कुशग्रंथ्या कोटिगुणं रुद्राक्षैः स्यादनंतकम् ॥

## अथ प्रातर्होमः ॥

उपयमनप्रभृत्यौपासनस्य परिचरणम् ॥ उपयमनकुशानादाय ॥ औपासनस्यावसथ्यस्याग्नेः परिचरणं व्याख्यायत इति सूत्रशेषः ॥ प्रभृतिग्रहणे उपयमनान्कुशानादाय सद्योऽभ्यादाय पर्युक्ष्य जुहुयादेतावद्वक्ष्यते ॥ होमश्चात्रोपदिष्टः ॥

शात्पतितं तोयं यथा गच्छति सागरम् ॥ सर्वदेवनमस्कारः केशवं प्रतिच्छति ॥ इति नमस्कृत्य गुरुमभिवादयेत् ॥ तद्यथा ॥ स्वस्तिकाकारहस्ताभ्यां कर्णौ स्पृष्ट्वा अमुकगोत्रः अमुकप्रवरः अमुकशर्माहं भो गुरो त्वामऽभिवादयामि ॥ यस्य स्मृत्या० ततः आचमनं कुर्यात्

## इति प्रातः संध्याप्रयोगः ।

संध्याकाललोपप्रायश्चित्तमाह॥संध्याकाले व्यतिक्रांते मंत्रं जप्त्वा पुनर्मनः॥ऋचं वाचं तृचं जप्त्वा ततः संध्यामुपासयेत् ॥ शातातपे ॥ संध्याकाले त्वतिक्रांते स्नात्वाचम्य यथाविधि ॥ जपेदष्टशतं देवीं ततः संध्यां समाचरेत् ॥ मदनपारिजाते ॥ कालातिक्रमणे चैव चतुर्थार्घ्यं प्रदापयेत् ॥ याज्ञवल्क्यः ॥ सर्वावस्थोऽपि यो विप्रः संध्योपासनतत्परः॥ ब्राह्मण्याच्च न हीयेत अन्यजन्मगतोऽपिवा ॥ निशायां वा दिवा वापि यदज्ञानकृतं भवेत् ॥ त्रैकालसंध्याकरणात्तत्सर्वं प्रविनश्यति ॥ यदह्ना कुरुते पापं कर्मणा मनसा गिरा॥ आसीनः पश्चिमां संध्यां प्राणायामैर्निहंति तत् ॥ अनृतं मद्यगंधं च दिवामैथुनमेव च ॥ पुनाति वृषलान्नं च संध्या बहिरुपासिता ॥ संध्याऽकरणे प्रत्यवायमाह ॥ स्नानं संध्यां त्यजेद्विप्रः सप्ताहं शूद्रतां व्रजेत् ॥ तस्मात्स्नानं च संध्यां च सूतकेऽपि न संत्यजेत् ॥ स्मृतिसारे ॥ देवाग्निद्विजविद्यानां कार्ये महति संस्थिते ॥ संध्याहीने न दोषोऽस्ति यतस्त

त्पुण्यसाधनम् ॥ अशक्तौ निर्जले देशे मृतौ जाते च सूतके जपेच्च मानसीं संध्यां कुशवारिविवर्जितमिति ॥ संध्यायां मनसा शक्त्या मंत्रानुच्चारयेद्विजः ॥ प्राणायामं विना सर्वान्धः प्राणान्नियम्य च ॥ मार्जनादि भवेत्सर्वं न वा कार्यं हि मार्जनम् ॥ उच्चार्य वाचा गायत्रीं दद्यादर्घ्यांजलीनपि ॥ अष्टाविंशतिकृत्वोऽत्र गायत्रीं मनसा जपेत् ॥ जपमालाधारण विधिः ॥ अनामामध्यमाक्रम्य जपं कुर्याच्च मानसम् ॥ तर्जनीं तु समाक्रम्य जपं नैव तु कारयेत् ॥ एकैकमणिमंगुष्ठेना कर्षन्प्रजपेन्मनुम् ॥ मेरौ तु लंघिते देवि न मंत्रः फलभाग्भवेत् ॥ प्रमादात्पतिते सूत्रे जपेदष्टोत्तरं शतम् ॥ पादयोः पतिते तस्मिन्प्रक्षाल्य द्विगुणं भवेत् ॥ योगी ॥ गायत्रीं यो न जानाति वृथा तस्य परिश्रमः ॥ एकतश्चत्वारोवेदा गायत्री चैकतः समः ॥ यमाः ॥ न तथा वेदजाप्येन पापं निर्दहति द्विजः ॥ यथा जपेन गायत्र्याः सर्वपापैः प्रमुच्यते ॥ मनुः ॥ गायत्री मंत्रसारोपि वरं विप्रःसुयंत्रितः ॥ जपमालोक्तातंत्रांतरे ॥ अंगुलीगणनादेकं रेखयाष्टगुणं भवेत् ॥ कुशग्रंथ्या कोटिगुणं रुद्राक्षैः स्यादनंतकम् ॥

## अथ प्रातर्होमः ॥

उपयमनप्रभृत्यौपासनस्य परिचरणम् ॥ उपयमनकुशानादाय ॥ औपासनस्यावसथ्यस्याग्नेः परिचरणं व्याख्यायत इति सूत्रशेषः ॥ प्रभृतिग्रहणे उपयमनान्कुशानादाय सद्योऽभ्यादाय पर्युक्ष्य जुहुयादेतावल्लक्ष्यते ॥ होमश्चात्रोपदिष्टः ॥

होमेपि च सति परिचरग्रहणादितिकर्त्तव्यता न भवति ॥ हस्तेनैवात्र होमः इतिकर्तव्यताव्युदासात् ॥ कथमिति कर्त व्यताव्युदास इति चेत् ॥ उपयमनप्रभृतीत्युक्तत्वात् ॥ पर्युक्षणं च मणिकोदकेन ॥ होमकालनियममाह ॥ अस्तमितानुदितयोः ॥ अस्तमितश्च अनुदितश्च अस्तमितानुदितौ तयोः ॥ तत्कर्म कर्तव्यमिति शेषः ॥ आवसथ्याधानानंतरं अस्तमिते च सूर्येऽनुदिते च सर्वदा होमः कार्यः ॥ अस्तमितलक्षणं कात्यायनेनोक्तम् ॥ यावत्सम्यङ्न भाव्यंते नभस्यृक्षाणि सर्वतः ॥ लोहितत्वं च नापैति तावत्सायं जुहूयते ॥ अनुदितश्च द्विविधः ॥ अनुदितश्च समयाध्युषितश्च ॥ तथाच मनुः ॥ उदितेऽनुदिते चैव समयाध्युषिते तथा ॥ तत्रानुदितः स्पष्टतारकोपलक्षितः ततःपरं उदयात्प्राक्समयाध्युषितः संपूर्णादित्यमंडलदर्शनोपलक्षित उदितः ॥ तत्रास्माकं सूत्रे अनुदित एव परिचरणमुक्तम् ॥ मनुवचने उदितग्रहणं शाखांतरगृह्याभिप्रायेण मुख्यकाले यदा होमो न भवति तदा गौणकालेपि होमः कार्यः ॥ तथाच मंडनः ॥ मुख्यकाले यदाऽवश्यं कर्म कर्तुं न शक्यते ॥ गौणकालेपि कर्तव्यं गौणोऽप्यत्रेदृशो भवेत् ॥ गौणकालपरिमाणमपि तेनैवोक्तम् ॥ आसायमाहुतेः कालात्कालोऽस्तिप्रातराहुतेः ॥ प्रातराहुतिकालात्प्राक्कालः स्यात्सायमाहुतेः ॥ मुख्यकालातिक्रमे प्रायश्चित्तपूर्वकं गौणकालेऽनुष्ठानम् ॥ गौणकालातिक्रमे तु लोप एव प्रायश्चित्तद्वयमात्रमेकमविज्ञातम् ॥ संध्यो-

पासनहोमौ च नित्यस्नानं विलोप्य च॥होमंच नैत्यकं शुद्ध्ये त्सावित्र्यष्टसहस्रकृत् ॥ प्राजापयमुक्तं द्वितीयं ॥ स्मृत्यर्थ-सारे होमकर्त्तारः॥यजमानः प्रधानं स्यात्पत्नी पुत्रश्च कन्यका॥ ऋत्विक्छिष्यो गुरुर्भ्राता भागिनेयः सुतापतिः॥ एतैरेव हुतं यच्च तद्धुतं स्वयमेव तु ॥ पत्नी कन्या च जुहयाद्विना पर्युक्षणक्रियाम् ॥ अत्र वचनात्पत्न्यादीनां मंत्रपाठे अधिकारः केवलं पर्युक्षणे नाधिकारः ॥ अग्निहोत्रे तु ॥ न वा कन्या न युवती नाल्पविद्यो न बालिशः ॥ होता स्यादग्निहोत्रस्य नार्तो नासंस्कृतस्तथा ॥ इति वचनात्पत्न्यादीनामनधिकारः ॥ त्यागे विशेषः। सन्निधौ यजमानःस्यादुद्देशत्यागकारकः ॥ असन्निधौ तु पत्नीस्यादध्वर्युस्तदनुज्ञया ॥ उन्मादे प्रसवे चार्तौ कुर्वीतानुज्ञया विना ॥ मंडनः ॥ त्यागं तु सर्वथा कुर्यात्तत्राप्यन्यतरस्तयोः ॥ उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेत् ॥ दध्ना तंडुलैरक्षतैर्वा ॥ गव्येन दध्ना वा व्रीहितंडुलैर्वा अक्षतैर्यवैर्वा जुहुयादित्यर्थः ॥ तेषामभावे शाखांतरगृह्यपरिशिष्टोक्तानि द्रव्याणि ग्राह्याणि ॥ प्रयोगरत्ने पयो दधि सर्पिर्यवागुरोदनं तंडुलाः सोमस्तैलमापो व्रीहयोऽयवास्तिला इति होम्यानि ॥ तंडुलनीवारश्यामाकयवानां व्रीहिशालियवगोधूमप्रियंगवः स्वरूपेणापि होम्यास्तिलाः स्वरूपेणैव शतं चतुःषष्टिर्वाहुतिर्व्रीहितुल्यानाम् ॥ तदर्धं तिलानाम् ॥ तदर्धं सर्पिस्तैलयोस्तैलं च तिलजंतिलातसीकुसुंभानाम् ॥ येन प्रथमां देवतां जुहुयात्ते-

मेव द्वितीयां जुहुयाद्येन च सायं जुहुयात्तेनैव प्रात-रिति ॥ अत्र तेनैव प्रातरिति प्रतिनिधिवर्जनम् ॥ बृहस्प-तिस्त्वाहुतिप्रमाणमाह ॥ प्रस्थधान्यं चतुः षष्टेराहुतेः परि-कीर्तितम् ॥ तिलानांच तदर्धं तु तंडुला व्रीहिभिः समाः ॥ प्रस्थश्च प्रसृतिद्वितीयमानं प्रस्थं मानचतुष्टयम् ॥ बौधायनं-स्तु ॥ व्रीहीनां च यवानां वा शतमाहुतिरिष्यते॥द्रवद्रव्यस्य मानं स्याद्धारणौ कर्णदीर्घिका॥सिद्धांतशेखरे॥ अन्नं ग्राससमं प्रोक्तं लाजा मुष्टिमितामताः॥दधिपक्षे तंडुलपक्षे च शेषप्राश नम् ॥ अक्षतपक्षे त्वभावः ॥ अग्नये स्वाहा प्रजापतये स्वा-हेति सायम् सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातः तत्र सायंकाले ॥ अग्नये स्वाहेति पूर्वमाहुतिं जुहोति उत्तरां जु-होति ॥ प्रातः काले सूर्याय स्वाहेति मंत्रेण पूर्वामाहुतिं हु-त्वा प्रजापतये स्वाहेत्युत्तरां जुहुयात् ॥ पुमाꣳ सौ मित्राव-रुणौ पुमाꣳ सावश्विनावुभौ ॥पुमानिंद्रश्च सूर्यश्च पुमाꣳ सं-वर्त्ततामयि पुनः स्वाहेति पूर्वां गर्भकामा पत्नी भवति तदा सायं प्रातः पूर्वामाहुतिं पत्न्यैव पुमाꣳ सौ मित्रावरुणावित्य-नेन मंत्रेण जुहोति उत्तरामाहुतिं यजमान एव जुहोति ॥

## अथ प्रातर्होमप्रयोगः॥

स च सूर्योदयात्पूर्वमग्नेः पश्चादुपविश्योपयमनकुशान्स-मिधस्तिस्रः पालाश्यः मणिकोदकं यवादिहोमद्रव्यमग्नेरुत्त-रतः प्रांचमासाद्य ॥ततःप्राणानायम्य देशकालौ स्मृत्वा

श्रीपरमेश्वरप्रीत्यर्थं आवसथ्याग्नौ प्रातर्होममहं करिष्ये ॥ तत्र सूर्यं प्रजापतिं तंडुलैर्यवैर्वाऽहंयक्ष्ये ॥ इति देवताभिधानं कृत्वोपयमनकुशानादाय तिष्ठन्समिधोऽभ्याधायोदकेनाग्निं पर्युक्ष्य दक्षिणजानु निपात्य हृदि सव्यं हस्तं प्रसारितांगुलिं निधाय ॥ द्वादशपर्वपूरकेण दधितंडुलयवानामन्यतमेन हविषा स्वंगारिणि स्वर्चिपि वह्नौ मध्यप्रदेशे देवतां ध्यायन् ॥ सूर्यप्रजापतिद्वयोर्मंत्रस्य प्रियमेधातिथिर्ऋषिः गायत्रीत्रिष्टुभो छंदसी क्रमेण सूर्यप्रजापती देवते प्रातर्होमे विनियोगः ॥ ॐ सूर्याय स्वाहा इदं सूर्याय नममेति त्यागांते हविः प्रक्षेपः ॥ संस्रवरक्षणम् ॥ तदुत्तरतः ॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये नमम ॥ सर्वत्र प्रजापतियागे मनसैव स्वाहाकारः संस्रवरक्षणम् ॥ पत्नी गर्भकामा चेत् ॥ पुमा२ सावित्यनेन मंत्रेण पूर्वामाहुतिं जुहोति ॥ इदं मित्रावरुणाभ्यामश्विभ्यामिंद्राय सूर्याय न ममेति त्यागः ॥ यजमानस्य संस्रवप्राशनम् ॥ पत्नीकर्तृकहोमशेषस्य पत्नी प्राशनं करोति ॥ अत्र विभ्राडित्यनुवाकेनोपस्थानमिति जयरामभाष्ये॥ इत्थमुपासनहोमं कृत्वौपासनाग्निजं भस्म वामहस्ते धृत्वा दक्षिणहस्तेनाच्छाद्य ॥ अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वंहँवाइदं भस्म मन एतानि चक्षूंपिभस्मानि इति मंत्रेण त्रिवारमभिमंत्र्य ॥ त्र्यंबकमिति मंत्रेण जलेन मिश्रयित्वा अनामिकामध्यमातर्जनीभिर्ललाटे हृन्नाभिकंठदक्षिणवामबाहुमूल म-

घ्यमणिबंधपृष्ठशिरस्थानेषु प्रणवेन बिभृयात् ॥ ॐ अग्नये नमः ॥ इति नमस्कृत्य स्वस्ति ॥ श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलम् ॥ आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ॥ ततः यस्य स्मृत्येत्युक्त्वा परमेश्वरार्पणं कुर्यात् ॥ इति ग्रामहोमप्रयोगः ॥

## अथ पूजाविधिर्मात्स्ये ॥

प्रातर्मध्यंदिने सायं देवपूजां समाचरेत् ॥ अशक्तौ विस्तरेणैव प्रातः संपूज्य केशवम् ॥ मध्याह्ने च तथा सायं पुष्पांजलिमपि क्षिपेत् स्कांदे ॥ कामासक्तोऽथवा क्रुद्धः शालिग्रामशिलार्चनात् ॥ भक्त्या वा यदि वाऽभक्त्या कलौ मुक्तिमवाप्नुयात् ॥ शिलाप्युक्ता प्रयोगपारिजाते ॥ शिलाप्यामलकी तुल्या पूज्या सूक्ष्मैव भावयेत् ॥ यथायथा शिला सूक्ष्मा तथा स्यात्तु महत्फलम् ॥ तथैव स्कांदे ॥ यवमात्रं तु गर्तः स्याद्यवार्द्धं लिंगमुच्यते ॥ शिवनाभिरिति प्रोक्तास्त्रिषु लोकेषु दुर्लभः ॥ श्री भारते ॥ कलौ कलितमोर्ध्वसं सर्वपापहरं हरिम् ॥ स्कांदे ॥ ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान्हरिः ॥ द्वापरेभगवान्विष्णुः कलौ देवो महेश्वरः ॥ शिवपूजनं बाणलिंगे अतिप्रशस्तमित्युक्तं भविष्ये ॥ बाणलिंगानि राजेंद्र ख्यातानि भुवनत्रये ॥ न प्रतिष्ठा न संस्कारस्तेषामावाहनं न च ॥ पक्वजंबूफलाकारं कुक्कुटांडसमाकृति ॥ भुक्तिमुक्तिप्रदं चैव बाणलिंग-

मुदाहृतम् श्रीसूर्यपूजोक्ता भविष्ये ॥ अग्निहोत्रादिवेदाश्च यज्ञाश्च वहुदक्षिणाः ॥ सूर्यार्चनस्य चैवैते कोटियज्ञेन नो समाः ॥ मेरुमंदरतुल्योऽपि राशिः पापस्य दारुणः ॥ आराध्य भास्करं मर्त्यस्तं नाशयाति तत्क्षणात् ॥ नरसिंहपुराणे ॥ न हि लिंगात्परं किंचित्पुण्यमभ्यधिकं क्वचित् ॥ इति विज्ञाय यत्नेन पूजनीयः सदा शिवः ॥ तथा ॥ दुर्गार्चनरतो नित्यं महापातकसंभवैः ॥ दोषैर्न लिप्यते वीर पद्मपत्रमिवांभसा ॥ देवपूजाया अकरणे दोषः ॥ यो मोहादथवालस्यादकृत्वा देवतार्चनम् ॥ भुंक्ते स याति नरके सूकरेष्विह जायते ॥ अतः प्रत्यवायपरिहारायाभीष्टप्राप्तये च देवेष्वेकतमस्याराधनं सर्वैरपि गृहस्थैरन्यैरपि यथारुचि यथाधिकारं कर्तव्यमिति सिद्धम् ॥ गणेशपूजा काम्यापि वहुभिरपि शिष्टैः सर्वदेशेषु क्रियते ॥ शिवपूजा वाणलिंगे विष्णुपूजा शालिग्रामे ॥ तथा च कौर्म्ये ॥ तस्माद्ब्रह्मा महादेवो विष्णुर्विश्वेश्वरः परः ॥ एकस्यैव स्मृतास्तिस्रस्तन्वः कार्यवशात्प्रभोः ॥ तस्मात्सर्व प्रयत्नेन वंद्याः पूज्याश्च सर्वदा ॥ यदीच्छेदचलं स्थानं यत्तन्मोक्षाख्यमुत्तमम् ॥ वर्णाश्रमप्रयुक्तेन धर्मेण प्रीतिसंयुतः ॥ पूजयेद्भावयुक्तेन यावज्जीवं प्रतिज्ञया ॥ इति वचनै ब्रह्मविष्णुशिवानां मोक्षेच्छया यावज्जीव प्रतिज्ञया पूजा विहिता सा वेदारब्धा तदाऽशौचमध्ये कार्या ॥ पंचायतनपूजा कूर्मपुराणे ॥ स्नानं संध्या ततो होमं गृहस्थोक्तेन वर्त्मना ॥ कृत्वा सूर्यं गणपतिं लक्ष्मीमीशं

तथा हरिम् ॥ पौरुषेण तु सूक्तेन नित्यं नत्वा समारभेत् ॥ अर्चनं मूलमंत्रेण वा कार्यं तथोंनमः शिवायेति मंत्रेण वा यजेदिति लिंगात् ॥ मूलमंत्रलक्षणं गारुडे ॥ प्रणवादिनमोऽन्तं च चतुर्थ्यंतं च सत्तम ॥ देवतायाः स्वकं नाम मूलमंत्रः प्रकीर्तितः ॥ ब्राह्मेऽपि ॥ ॐ कारादिकसंयुक्तं नमस्कारांतकीर्त्तनम् ॥ स्वनाम सर्वसत्वानां मंत्र इत्यभिधीयते ॥ ॐ नमः सूर्याय इत्यादि ॥ पंचायतनप्रकारो ज्ञानमालायाम् ॥ सहस्रांशुं यदा मध्येईशान्यां पार्वतीपतिम् ॥ आग्नेय्यामेकदंतं च नैर्ऋत्यां तु गणाधिपम् ॥ वायव्यां पूजयेद्देवीं भोगमोक्षैक भूमिकाम् ॥ इति सूर्यपंचायतनम् ॥ हेरंबं तु यदा मध्ये ईशान्यामच्युतं यजेत् ॥ आग्नेय्यां पंचवक्त्रं तु नैर्ऋत्यां जगदंबिकाम् ॥ वायव्यां द्युमणिं चैव यजेन्मंत्री ह्यतंद्रितः इति ॥ इति गणेशपंचकम् ॥ भवानीं तु यदा मध्ये ईशान्यां माधवं यजेत् ॥ आग्नेय्यां पार्वतीनाथं नैर्ऋत्यां गणनायकम् ॥ प्रद्योतनं तु वायव्यामाचार्यैश्च प्रपूजयेत् ॥ इति देवीपंचकम् ॥ शंकरं तु यदा मध्ये ईशान्यां श्रीपतिं यजेत् ॥ आग्नेय्यां च तथा हंसं नैर्ऋत्यां पार्वतीसुतम् ॥ वायव्यां च सदा पूज्या भवानी भक्तवत्सला ॥ इति शिवपंचायतनम् ॥ यदा तु मध्ये गोविंदमैशान्यां शंकरं न्यसेत् ॥ आग्नेय्यां गणनाथं च नैर्ऋत्यां तपनं तथा ॥ वायव्यामंबिकां चैव यजेन्मंत्री समाहितः ॥ इति विष्णुपंचायतनम् ॥ वोपदेवश्च ॥ शंभौ मध्यगते हरीनहरभूदेव्यो हरौ शंकरेभास्ये

नागसुता रवौ हरगणेशा अंबिकाः स्थापिताः ॥ देव्यां विष्णुशिवैकदंतरवयो लंबोदरेऽजेश्वरेनार्थाः शंकरभागतोऽति सुखदा व्यस्तास्तु हानिप्रदाः ॥ शंकरभागतः ईशानकोणादारभ्य प्रदक्षिणमित्यर्थः ॥ स्वस्थानवर्जिता देवाः शोकदुःखभयप्रदाः ॥ तन्मंडलस्थितो राजा साधकश्च विनश्यति ॥ अत्र दिक्स्वरूपमुक्तं प्रयोगपारिजाते—देवस्य मुखमारभ्य शिवं प्राचीं च कल्पयेत्॥अत्र क्रमःपाद्मे-रविर्विनायकश्चंडी ईशो विष्णुस्तु पंचमः ॥ अनुक्रमेण पूज्यंते व्युत्क्रमेतुमहद्भयम् ॥ तथा ॥ पूज्यपूजकयोर्मध्ये प्राची प्रोक्ता विचक्षणैः ॥ अथ प्रतिमाः भार्गवार्चनदीपिकायां भविष्ये ॥ सौवर्णी राजती ताम्री मृन्मयी च तथा भवेत् ॥ अंगुष्टपर्वादारभ्य वितस्तिं यावदेव तु ॥ गृहेषुप्रतिमा कार्या नाधिका शस्यते बुधैः ॥ देवीपुराणे—सप्तांगुलं समारभ्य यावच्च द्वादशांगुलम् ॥ गृहेष्वर्चा समाख्याता प्रासादे चाधिका शुभा ॥ पाद्मे—गृहे लिंगद्वयं नार्च्यं गणेशत्रयमेव च ॥ द्वौ शंखौ नार्चयेच्चैव भग्नां च प्रतिमां तथा ॥ नार्चयेत्तु तथा मत्स्यकूर्मादिदशकं तथा ॥ शालिग्रामाः समाः पूज्याः समेषु द्वितयं नहि ॥ विषमा नैव पूज्यास्तु विषमेष्वेक एव हि ॥ शालिग्रामशिला भग्ना पूजनीया सचक्रका ॥ खंडिता स्फुटिता वापि शालिग्रामशिला शुभा ॥ विष्णुधर्मे—शालिग्रामशिलावापि चक्रांकितशिला तथा ॥ ब्राह्मणः पूजयेन्नित्यं क्षत्रियादिर्न पूजयेत् ॥

शालिग्राममयी मुद्रा संस्थिता यत्रकुत्रचित् ॥ वाराणस्यां यथाधिक्यं समंताद्योजनत्रयम् ॥ ये मृतास्तत्समीपे तु मृतो वानीयतेऽतिकम् ॥ सर्वो मोक्षमवाप्नोति सत्यंसत्यं न चान्यथा ॥ तत्रैव ॥ चक्रांकमिथुनं पूज्यं नैकचक्रांकमर्चयेत् ॥ चक्रांकमिथुनात्सार्द्धं शालिग्रामं प्रपूजयेत् ॥ वाराहे ॥ म्लेच्छदेशेऽशुचौ वापि चक्रांको यत्र तिष्ठति ॥ योजनानां तथा त्रीणि मम क्षेत्रं वसुंधरा ॥ तत्रैव शालिग्रामं प्रक्रम्य ॥ क्रयक्रीता परिज्ञेया मध्यमा याचिताऽधमा ॥ एवं लक्षणसंपन्ना पारंपर्यक्रमागता ॥ उत्तमा सापितज्ज्ञेया गुरु दत्तापि तत्समा ॥ प्रकृतमनुसरामः ॥ पूज्यपूजकांतः प्राची आगमोक्तपूजायामेव तत्परिभाषायामुक्त्वा दिति पंचायतनपूजाक्रमोऽपि तत्रैवोक्तः ॥ मुख्ये पुष्पांऽजलिं दत्त्वा गणेशाद्यर्चनं भवेत् ॥ गणेश एव मुख्यश्चेत्तत्र सूर्यक्रमाद्भवेदिति वचनात्प्रधानदेवतायां पुष्पांजल्यंतं पूजा कांडे समाप्य पदार्थानुसमयेन गणेशादीनर्चयेत् ॥ शारदातिलकटीकायां तु—पुष्पांजलिं मुख्ये आदौ दत्त्वार्चनं कार्यमित्युक्तम् ॥ वस्तुतस्त्वयमपि पूजाक्रमस्तांत्रिकपूजायामेव ज्ञेयः ॥ तत्रैवोक्तत्वात् ॥ वैदिकपूजायां तु स्थापनक्रम एव ॥ अत एव विष्णुपंचायतने विष्णुशिव गणेशसूर्यदुर्गाभ्यो नम इति श्लिष्टमंत्र उक्तः ॥ शिवमुख्ये शिवविष्णुसूर्यगणेशदुर्गाभ्यो नम इति श्लिष्टमंत्रः ॥ इदं च पूजनं भूतशुद्धिं प्राण प्रतिष्ठां मातृकान्यासं च विधा-

य कार्यमिति प्रयोगपारिजातादयः ॥ शौनकोऽपि ॥ कृत्वा तु भूतशुद्धिं च मातृकान्यासमाचरेत् ॥ अथ पूजाविधौ मूलवाक्यानि ॥ अर्चनं संप्रवक्ष्यामि विष्णोरमिततेजसः ॥ यत्कृत्वा मुनयः सर्वे परं निर्वाणमाप्नुयुः ॥ देवार्चनमहं वक्ष्ये यदुक्तं मुनिभिः पुरा ॥ वैदिकैरेव तन्मंत्रैर्यस्य यैस्तस्य तैरपि ॥ अर्चयन्वैदिकैर्मंत्रैर्योऽनुग्रहमपेक्षते ॥ वैदिकानुग्रहस्तस्य किं वेदादधिकं परम् ॥ ब्रह्माणं वैधसैर्मंत्रैर्विष्णुं स्वैः शंकरं स्वकैः ॥ अन्यानपि तथा देवानर्चयेन्निजमंत्रकैः ॥ मंत्रन्यासं पुरा कृत्वा स्वदेहे देवतासु च ॥ गायत्र्योंकारन्यस्तांगः पूजयेद्विष्णुमव्ययम् ॥ विन्यस्य व्याहृतीः सर्वाः प्रोक्तस्थानक्रमेण तु ॥ ब्रह्मीभूतः शुचि शांतो देवयागमुपाचरेत् ॥ विष्णुरादिरयं देवः सर्वामरगणार्चितः ॥ नामग्रहणमात्रेण पापशंकां छिनत्ति यः ॥ तदर्चनं प्रवक्ष्यामि विष्णोरमिततेजसः ॥ ससंज्ञा मुनयः सर्वे विष्णोः सायुज्यमाप्नुयुः ॥ षट्स्वमीषु हरेः सम्यगर्चनं मुनिभिः कृतम् ॥ अप्स्वग्नौ हृदये सूर्ये स्थंडिले प्रतिमासु च ॥ अग्नौ क्रियावतां देवो यजनीयो मनीषिणाम् ॥ प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ॥ आपो ह्यायतनं तस्य तस्मात्तासु हरिः सदा ॥ सर्वगत्वेन विष्णोस्तु स्थंडिले भावितात्मनाम् ॥ दद्यात्पुरुषसूक्तेन आपः पुष्पाणि चैव हि ॥ अर्चितं स्यादिदं तेन विश्वं भुवनसप्तकम् ॥ अनुष्टुभस्य सूक्तस्य त्रिष्टुभं तस्य दैवतम् ॥ पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृ

पुष्पं देयं दशम्यां तु एकादश्या च धूपयेत् ॥ द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेद्यकम् ॥ चतुर्दश्या नमस्कारं पंचदश्या प्रदक्षिणम् ॥ षोडश्योद्वासनं कुर्याच्छेपकार्याणि पूर्ववत् ॥ २९ ॥ स्नानवस्त्रे च नैवेद्ये दद्यादाचमनं हरेः॥ षण्मासात्सिद्धिमाप्नोति योऽर्चयेद्देवमेव हि ॥ आदित्यमंडले देवं ध्यात्वा विष्णुमनामयम् ॥ स याति ब्रह्मणः स्थानं नात्र कार्या विचारणा ॥ सूक्तेन विष्णुविधिना समुदीरितेन योऽनेननित्यमजमादिमनंतमूर्तिम् ॥ भक्त्यार्चयेत्पठति यश्च स विष्णुदेहं विप्रो विशेद्धरिवरेण कृतार्द्धदेहः ॥ पंचरात्रविधानेन स्थंडिले वापि पूजयेत् ॥ जलमध्यगतो वापि पूजयेज्जलमध्यतः ॥रुद्रं रुद्रविधानेन ब्रह्माणं च विधानतः॥ सूर्यं संहितमंत्रैश्च तदीरितविधानतः ॥ दुर्गां कात्यायनीं देवीं तथा वाग्देवतामपि ॥ स्कंदं विनायकं चैव योगिनीं क्षेत्रपालकान् ॥ विधिवत्पूजयेत्सर्वान्यो विप्रोभक्तितत्परः ॥ विष्णुना सुप्रसन्नेन विष्णुलोकमवाप्नुयात्॥ग्रहांश्च पूजयेत्पश्चाद्ब्राह्मणः शांतितत्परः॥ आरोग्यं पुष्टिसंयुक्तो दीर्घमायुरवाप्नुयात्॥ग्रहा गावो नृपा विप्राः सद्भिः पूज्याः सदा नरैः॥ पूजिताः पूजयंत्येते निर्दहंत्यपमानिताः ॥ योहितः सर्वतत्त्वेषु नृपगोब्राह्मणेषु च ॥ इहामुत्र च पूज्योऽसौ विष्णुलोकमवाप्नुयात् ॥ उक्तो ग्रहस्थस्य सुरार्चनस्य धन्यो विधिर्विष्णुपदोपलब्ध्यै॥कुर्याद्द्विजातिःप्रतिवासरं यो वेदोक्तमंत्रैः समुपाहितायाम् ॥ अत्र यद्यप्यावाहनं विसर्जनं चोक्तं

तत्प्रत्यहं प्राणप्रतिष्ठापूर्वकप्रतिमादिपूजनविषयं ॥ अन्यत्वादावंते पुष्पांजलिं दद्यात् ॥ आदावंते मंत्राभ्यां पुष्पांजलिसमर्पणम् इति नारदीयवाक्यात् ॥ वस्त्रं प्रत्यहं न नवीनं किंतु समर्पितमेवाभ्युक्ष्यसमर्पयेत् ॥ तदुक्तं तत्त्वसारे ॥ वस्त्रमभ्युक्षणाच्छुद्धचेन्न परं तु दिनेदिने ॥ आचारमयूखे मंत्रराजविधौ ॥ प्रतिमापट्टयंत्राणां नित्यं स्नानं न कारयेत् ॥ कारयेत्पर्व दिवसे यथा मलनिवारणम् ॥ पूजायां विहितपुष्पाणि भविष्यपुराणे ॥ मालती मल्लिका चैव दुर्वा चाशोककर्णिका ॥ पाटला करवीराणि जपा जयंतिरेव च ॥ चंपको वकुलं चैव तथैवागस्तिकिंशुकौ ॥ नारसिंहपुराणे ॥ शतपुष्पं बिल्वपत्रं चंपकं तगरं तथा ॥ करवीरं तथा श्वेतं पालाशं कुशपुष्पकम् ॥ वनमालत्यशोकं च सेवंती कुब्ज मालती ॥ त्रिसंध्यं च तथा श्वेतं कुंदं च शतपत्रकम् ॥ मल्लिका चैव जाती च सर्वपुष्पाद्विशिष्यते ॥ पत्राण्यपि तत्रैव ॥ अपामार्गं भृंगराजं शमीपत्रं च खादिरम् ॥ दूर्वा च कुशपत्रं च दमनं मरुकं तथा ॥ ततः श्रेष्ठं बिल्वपत्रं ततश्च तुलसी वरा ॥ पल्लवान्यपि चैषां स्युः शस्तान्यर्चाविधौ हरेः ॥ अगस्तिवृक्षसंभूतैः कुसुमैरसितैः सितैः ॥ येऽर्चयंति हि देवेशं तैः प्राप्यं वैष्णवं पदम् ॥ तुलसी मालती विष्णुः केतक्या यापि पूजितः ॥ समाः सहस्रं सुप्रीतो भवेत्तु मधुसूदनः ॥ स्मृतिसारे ॥ वैधृतौ च व्यतीपाते भौमभार्गवभानुषु ॥ पर्वद्वये च संक्रांतौ द्वादश्यां सूतकद्वये ॥ तुलसीं ये विचिन्वंति

ते छिंदंति हरेः शिरः॥विष्णुधर्मोत्तरे॥रविवारं विना दूर्वां तुलसीं द्वादशीं विना ॥ पाद्मे ॥ द्वादश्यां तुलसीपत्रं धात्रीफलंच कार्तिके ॥ देवार्थं तुलसीच्छेदो होमार्थं समिधस्तथा ॥ इंदुक्षये न दुष्येत गवार्थं तु तृणस्य च ॥ ग्रहणमंत्रस्तु पाद्मे ॥ तुलस्यमृतनामासि सदा त्वं केशवप्रिये ॥ केशवार्थं विचिन्वामि वरदा भव शोभने ॥ दक्षः ॥ समित्पुष्पकुशादीनां द्वितीयः प्रहरो मतः ॥ अथ पुष्पादेः पर्युषितत्वम् ॥ भविष्ये ॥ प्रहरं तिष्ठते जाती करवीरमहर्निशम् ॥ तुलस्यां बिल्वपत्रेषु सर्वेषु जलजेषुच ॥ न पर्युषितदोषोस्ति मालाकारगृहेऽपि च ॥ बृहन्नारदीये ॥ वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् ॥ न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ॥ पाद्मे ॥ तुलसी पर्युषिता नैव बिल्वं तु त्रिदिनावधि ॥ पद्मं पंचदिनात्त्याज्यं शेषं पर्युषितं विदुः ॥ स्कांदे ॥ पालाशं दिनमेकं तु पंकजं च दिनत्रयम् ॥ पंचाहं बिल्वपत्रं चदशाहंतुलसीदलम्॥स्मृत्यंतरे ॥ पंकजंपंचरात्रं स्याद्दशरात्रं तु बिल्वकं ॥ तुलस्यैकादशाहात्तु पुनः प्रक्षाल्य पूजयेत् ॥ स्कांदे ॥ गंगाजलं त्र्यहाद्ग्राह्यं पूजने भक्तिसंयुतः ॥ भविष्ये ॥ नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणेश्वरम् ॥ दूर्वाभिर्नार्चयेद्दुर्गां केतकैर्न महेश्वरम्॥ मंत्रमहोदधौ॥ अक्षतार्कधत्तूरौ विष्णौ नैवार्पयेत्सुधीः ॥ बंधूकं केतकीं कुंदं केसरं कुटजं जपाम् ॥ शंकरं नार्पयेद्विद्वान्मालतीं यूथिकामपि ॥ शक्तौ दूर्वार्कमंदारान्मालूरंतगरं रवौ ॥ विनायके तु

तुलसीं नार्पयेज्जातु चिद्बुधः ॥ श्वेतं पीतं हरेरिष्टं रक्तं रविगणेशयोः ॥ निर्गंधं केशकीटादिदूषितं चोग्रगंधकम् ॥ शुष्कं पर्युषितं कृष्णं भूमिगं नार्पयेत्सुधीः ॥ चंपकं कमलं त्यक्त्वा कलिकामपि वर्जयेत् ॥ कुरंटकं कांचनारं वर्जयेद्बृहतीद्वयम् ॥ पत्रं पुष्पं फलं देवे न प्रदद्यादधोमुखं ॥ पुष्पांजलौ न तद्दोषस्तथा पर्युषितस्य च ॥ तुलसी वकुलो वृक्षश्चंपकश्च सरोजिनी ॥ बिल्वकल्हारदमनास्तथा कुरवकं कुशाः ॥ दूर्वाहिवल्ल्यपामार्गविष्णुक्रांतमुनिद्रुमाः ॥ धात्रीयुतानामेतेषां पत्रैः कुर्यात्सुरार्चनम् ॥ जंबुदाडिमजंबीरतिंतिणीबीजपूरकाः ॥ रंभा धात्री च बदरी रसालः पनसोऽपि च ॥ एषां फलैर्यजेद्देवं तुलसी तु हरेः प्रिया॥सुवर्णपुष्पं तुलसी नैव निर्माल्यतां व्रजेत्॥अथ शिवनिर्माल्यनिर्णयः॥ धराहिरण्यगोरत्नताम्ररौप्यांशुकादिकान् ॥ विहाय शेषं निर्माल्यं चंडेशाय निवेदयेत्॥अन्यदत्तप्रदीपांश्च तांबूलं गंधपुष्पकम् ॥ दद्याच्चंडाय निर्माल्यं शिवभुक्तं तु सर्वशः ॥ आचार्यशिवचंडानामाशाभंगे तु लक्षतः ॥ धनस्य भक्षणे तेषां पादोनलक्षमीरितम् ॥ निर्माल्ये भक्षिते लक्षपादतः शुद्धिरीरिता॥ दानं च भक्षणसमं तदर्धं तदुपेक्षणे ॥ अकस्माद्भक्षयेद्वापि निर्माल्यस्य जपेत्सुधीः ॥ ब्रह्मपंचकसाहस्रमर्धेन सहितं ततः ॥ कामतो भक्षणे दीक्षा प्रायश्चित्तं न चान्यतः ॥ निर्माल्यलंघने पापं प्रजपेदयुतं ततः ॥ स्पर्शश्च लंघनसमो विक्रयो भक्षणेन च ॥ स्मृत्यर्थसारे ॥ शैवसौ-

रनिर्माल्यभक्षणे चांद्रम् ॥ अभ्यासे द्विगुणं मत्याभ्यासे त्रिगुणम् ॥ इदं ज्योतिर्लिंगाव्यतिरिक्तविषयम् ॥ भविष्ये ॥ ज्योतिर्लिंगं विना लिंगं यः पूजयति सत्तमः॥ तस्य नैवेद्य-निर्माल्यभक्षणात्तप्तकृच्छ्रकम् ॥ शालिग्रामोद्भवे लिंगे बाणलिंगे स्वयंभुवि ॥ रसलिंगे तथार्षे च सुरसिद्धप्रतिष्ठिते॥ हृदये चन्द्रकांते च स्वर्णरूप्यादिनिर्मिते ॥ शिवदीक्षावता भक्तेनेदं भक्ष्यमितीर्यते ॥ तथा ॥ बाणलिंगे स्वयंभूते चन्द्रकांते हृदि स्थिते ॥ चांद्रायणसमं ज्ञेयं शंभोर्नैवेद्यभक्षणम् ॥ लिंगे स्वयंभुवे बाणे रत्नजे रसनिर्मिते ॥ सिद्धप्रतिष्ठिते चैव न चंडाधिकृतिर्भवेत् ॥ यत्र चंडाधिकारोऽस्ति तद्भोक्तव्यं न मानवैः॥ चंडाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः ॥ त्रैविक्रम्याम् ॥ बाणलिंगे च लोहे च सिद्धलिंगे स्वयंभुवि ॥ प्रतिमासु च सर्वासु न चंडोधिकृतो भवेत् ॥ अब्रह्मापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत् ॥ तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते ॥ अनुपनीतेन ग्राह्यमिति श्रीदत्तः ॥ शिवदीक्षाहीनैर्न ग्राह्यमिति शैवाः ॥ तिथितत्त्वे हेमाद्रौ परिशिष्टे ॥ अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् ॥ शालिग्रामशिलासंगात्सर्वं याति पवित्रताम् ॥ पंचायतनपूजायां तंत्रेण च निवेदितम्॥ऋषिमादौ नियुंजीत छंदो मध्ये नियोजयेत् ॥ देवतामवसाने च मंत्रस्य मंत्रासिद्धये ॥ मनोजूतिरित्यृचस्य देवता च बृहस्पतिः ॥ बृहस्पति ऋषिश्छंदो हृदये विन्यसेत्ततः ॥ अत्रोध्यग्निऋषिर्नोधनिष्टु-

द्देवोग्निमस्तके ॥ मूर्धानमिति भरद्वाजत्रिष्टुबग्निःशिखां स्पृशेत् ॥ मर्माणि ते प्रतिरथम् त्रिष्टुप् मर्माणि देवता ॥ कवचे विन्यसेत्तत्र नेत्रे विश्वतस्य च॥ विश्वतश्चक्षुरित्यस्य विश्वकर्मा देवता ॥ विश्वकर्मा भौवनाख्यऋषिस्त्रिष्टुप्चक्षुषोः ॥ मानस्तोके जगत्यैकरुद्रास्त्रेपरमेष्ठिनः ॥ एवं न्यासविधिं कृत्वा ततः पूजां समारभेत् ॥

## अथ पूजाप्रयोगः

ततः प्राङ्मुखउदङ्मुखो वा स्वासने उपविश्य दर्भपवित्रपाणिः पूर्ववच्छिखाबंधनमाचमनं प्राणायामं कृत्वा ॥ देशकालौ स्मृत्वा ॥ शुभपुण्यतिथौ ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं यथाशक्त्या यथाज्ञानं यथामिलितोपचारैः श्रीशिवादिपूजां करिष्ये इति ॥ पृथ्वि त्वयेति मंत्रस्य मेरुपृष्ठ ऋषिः सुतलं छंदः कूर्मो देवता आसने विनियोगः. पृथ्वि त्वया० ॥ अपसर्पन्त्विति मंत्रस्य वामदेव ऋषिः अनुष्टुप्छंदः भूतानि देवता भूतोत्सादने विनियोगः ॥ ॐ अपसर्पन्तुते० ॥ अपक्रामंत्विति मंत्रेण पादतलपार्ष्णिणा भूमिं त्रिः प्रहृत्य षडंगन्यासं कुर्यात् ॥ तद्यथा ॥ मनोजूतिरिति मंत्रस्य बृहस्पतिर्ऋषिः बृहती छंदः बृहस्पतिर्देवता हृदयन्यासे जपे विनियोगः॥ ॐ मनोजूति० प्रतिष्ठहृदयाय नमः ॥ अबोध्यग्निरिति मंत्रस्य बोध ऋषिः त्रिष्टुप्छंदः अग्निर्देवता शिरोन्यासे विनियोगः ॥ ॐ अबोध्य

ग्निः० कमच्छ ॥ शिरसे स्वाहा ॥ मूर्द्धानमिति मंत्रस्य भरद्वाज ऋषिः त्रिष्टुप्छंदः अग्निर्देवता शिखान्यासे विनियोगः ॥ ॐ मूर्धानंदिवो० तेदेवाः शिखायै वषट् ॥ मर्माणितेइति मंत्रस्याप्रतिरथ ऋषिः त्रिष्टुप्छंदः मर्मा देवता कवचन्यासे विनियोगः ॥ ॐ मर्माणि ते० मदंतु ॥ कवचायहुं ॥ विश्वतश्चक्षुरिति मंत्रस्य विश्वकर्मा भौवन ऋषिः त्रिष्टुप्छंदः विश्वकर्मा देवता नेत्रन्यासे विनियोगः ॥ ॐ विश्वतश्च० देवएकः नेत्रत्रयाय वौषट् ॥ मानस्तोकेति मंत्रस्य परमेष्ठी ऋषिः जगती छंदः एकरुद्रो देवताऽस्त्रन्यासे विनियोगः ॥ ॐ मानस्तो० हवामहे ॥ अस्त्राय फट् ॥ एवं षडंगन्यासं कृत्वा ॥ देवा आयांतु यातुधाना अपयांतु ॥ विष्णो देवयजनं रक्षस्व ॥ इति मंत्रं पठेत् ॥ ततः स्ववामभागे शुद्धजलपूरितं कुंभं निधाय ॥ तत्त्वायामिइति मंत्रस्य शुनःशेप ऋषिः त्रिष्टुप् छंदः वरुणो देवता कलशे वरुणावाहने विनियोगः ॥ तत्त्वायामि०चंदनादिना पूजयेत् ॥ कलशस्येत्यादिमंत्रैः प्रार्थयेत् ॥ ततो धेनुमुद्रां प्रदर्श्य कलशोदकेन पूजासंभारानात्मानं च संप्रोक्ष्य ॥ ततः शंखपूजां कुर्यात् ॥ तद्यथा ॥ मत्स्यमुद्रया त्रिकोणं तद्बहिः षट्कोणं तद्बहिः चतुरस्रं तद्बाह्ये वृत्तं गोमयेन जलेन चंदनेन वा विलिप्याभ्यर्च्य शंखं प्रणवेनाद्भिः पूरयित्वा मंडले संस्थाप्य ॥ पांचजन्याय विद्महे पावमानाय धीमहि ॥ तन्नः शंखः प्रचोदयादिति मंत्रेण गंधाक्षतपुष्पाणि दत्त्वा ॥ सूर्यमंडलादंकु-

शमुद्रया तीर्थमाकृष्य शंखमुद्रां प्रदर्श्य प्रार्थयेत् ॥ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ॥ नमितः सर्वदेवैश्च पांचजन्य नमोस्तुते ॥ पृथिव्यां यानि तीर्थानि स्थावराणि चराणि च ॥ तानि तीर्थानि शंखेऽस्मिन्विशंतु ब्रह्मशासनात् ॥ ततः शंखोदकेन प्रोक्ष्य ॥ आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ॥ कुरु घंटे वरं नादं देवतास्थानसंनिधौ॥ इति घंटां वादयित्वा ॥ पुरुषसूक्तेन न्यासं कुर्यात् ॥ सहस्रशीर्षेत्यादिषोडशर्चस्य सूक्तस्य नारायण ऋषिः आद्यानां पंचदशर्चां अनुष्टुप्छंदः अंत्यायास्त्रिष्टुप्छंदः सर्वासां पुरुषो देवता स्वांगन्यासे विनियोगः ॥ यथा ॥ सहस्रशीर्षेति वामकरे ॥ पुरुषएवेति दक्षिणकरे ॥ एतावानस्येति वामपादे ॥ त्रिपादूर्ध्वेति दक्षिणपादे ॥ ततो विराडजायतेति वामजानौ ॥ तस्माद्यज्ञादिति दक्षिणजानौ ॥ तस्माद्यज्ञात्सर्वहुत ऋचेति वामकट्याम् ॥ तस्मादश्वाइतिदक्षिणकट्याम् ॥ तंयज्ञमितिनाभौ ॥ यत्पुरुषमिति हृदये ॥ ब्राह्मणोस्येति वामबाहौ ॥ चंद्रमा मनसेति दक्षिणबाहौ ॥ नाभ्या आसीदिति कंठे ॥ यत्पुरुषेणेति मुखे॥सप्तास्यासन्निति वामदक्षिणनेत्रयोः ॥ यज्ञेन यज्ञमिति मूर्ध्नि ॥ एवं न्यासं कृत्वा आत्मानं गंधाक्षतपुष्पैरभ्यर्च्य स्वशिरसि पुष्पांजलिं दत्त्वा शिवो भूत्वा शिवं यजेत् ॥ ततः देवस्य पुरतः हेमरजतताम्रपात्राणामन्यतमं पात्रचतुष्टयं प्रक्षाल्यउदकक्रमेण संस्थाप्य तत्र गंधादि निक्षिपेत् ॥ आद्ये दूर्वाविष्णुक्रांताश्या-

माकपत्राणि ॥ द्वितीये गंधपुष्पाक्षतकुशाग्रसर्षपयवदूर्वाः॥ तृतीये जातिफलकंकोललवंगानि ॥ चतुर्थे दधि मधु च ॥ करौ प्रक्षाल्य देवांगन्यासं पूर्वोक्तप्रकारेण कुर्यात् ॥ ततः षोडशोपचारैः पूजयेत् ॥ मूर्तौ पुष्पांजलिं चैव तदावाहनमीरितम्॥शालिग्रामे शिलायां वा नावाहनविसर्जने॥ ध्यानम्॥ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्रावतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम् ॥ पद्मासीनं समंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्वरूपं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम् ॥ ॐ सहस्रशीर्षा० गुलम् ॥ श्रीशिवविष्णुसूर्यगणेशदुर्गाभ्योनमः पुष्पांजलिंसमर्पयामि॥ एवंसर्वत्र ॥ पुरुषएवेत्यासनम् ॥ एतावानस्येति पाद्यम् ॥ स्थापितपात्राणां मध्ये प्रथमपात्रेण पाद्यम् ॥ त्रिपादूर्ध्वेत्यर्घ्यम् ॥ द्वितीयेनार्घ्यम् ॥ ततो विराडजायतेत्याचमनीयम् ॥ तृतीयपात्रेणाचमनीयम् ॥ मधुवातेतिमधुपर्कम् ॥ तस्माद्यज्ञात्सर्वहुतः संभृतमिति स्नानम् ॥ चतुर्थपात्रेण स्नानम् ॥ पंचामृतसत्वे तन्मंत्रैस्तत्तद्द्रव्येण स्नापयित्वा शुद्धोदकेन प्रक्षालनं तदंते शुद्धजलेन स्नानम्॥ततः सांगरुद्राध्यायेन पुरुषसूक्तेन च अभिषेकः ॥ पुनराचमनम् ॥ तस्माद्यज्ञात्सर्वहुतऋचेति वस्त्रम् ॥ तस्मादश्वेत्युपवीतम्॥ तंयज्ञमितिगंधम् ॥ यत्पुरुषमिति पुष्पम् ॥ विहितपत्रपुष्पाभावे निषिद्धवर्ज्यमन्यदपि पुष्पं देयम् ॥ तदभावे पत्रं तदभावे फलं पुष्पं तु बहुवारं पुष्पमूर्ध्वमुखं प्रदापयेत् ॥ अ-

धोमुखं पत्रं च ॥ ब्राह्मणोस्येति धूपम् ॥ चंद्रमामनसेति दीपं ॥स्वर्णादिभाजने साज्यशर्करं पायसादिकं यथाशक्ति परिवेष्य गायत्र्या संप्रोक्ष्य धेनुमुद्रां दर्शयित्वा देवे पुष्पांजलिं दत्त्वा नाभ्याआसीदिति मंत्रेण ग्रासमुद्रयानैवेद्यम् पूजितां घंटां वामहस्तेन वादयन्धूपदीपनैवेद्यसमर्पणं कुर्यात् ॥ ततः आचमनार्थमुदकं करोद्वर्त्तनार्थं चंदनम् फलं तांबूलं दक्षिणां नीराजनं च निवेद्यम् यत्पुरुषेणेतिनमस्कारः ॥ सप्तास्यासन्निति प्रदक्षिणाम् ॥ यज्ञेन यज्ञमिति मंत्रं पुष्पांजलिं देवस्य मूर्ध्नि दद्यात् ॥ ततः सद्योजातादिपंचमंत्रान्पठेत् अग्निमावाह्य पुरुषसूक्तेन प्रत्यृचमाज्यं हुत्वा पुनस्तेनैव सूक्तेन षोडशपुष्पाण्यर्चयित्वा सूक्तं जपेत् ॥ होमाभावे द्विरावृत्तिः ॥ तदनंतरं स्वोपदिष्टं मूलमंत्रं यथाशक्ति जपित्वा कर्मेश्वरार्पणं कुर्यात्॥घंटां शंखं च संपूज्य देवं प्रार्थयेत् ॥ मंत्रहीनं० ॥ मत्समो नास्ति पापिष्ठस्त्वत्समो नास्ति पापहा ॥ इति संचित्य देवेशं यथेच्छसि तथा कुरु ॥ इति प्रार्थ्य षडंगन्यासं कुर्यात् ॥ ततः यथाज्ञानेन पूजाख्येन कर्मणा भगवान्परमेश्वरः प्रीयतां नमम ॥ इति देवपूजाप्रयोगः॥

## अथ तीर्थग्रहणम् ॥

शंखमध्ये स्थितं तोयं भ्रामितं केशवोपरि ॥ अंगलग्नं मनुष्याणां ब्रह्महत्यां व्यपोहतु ॥ इति देवोपरि भ्रामयित्वा जलं शिरस्युरसि चाभ्युक्ष्य ॥ आकालमृत्युहरणं ब्रह्महत्यादि

नाशनम् ॥ रोगघ्नं पुण्यदं पास्ये सुरच्छदावनेजनमिति मंत्रेण देवतीर्थे पिबेत् ॥ देवनिर्माल्यं गृहीत्वा दक्षिणनासावघ्राणं कृत्वा शिरसि धारयेत् ॥ एवं यः पूजयेद्देवं त्रिकालं धर्ममाचरन् ॥ न जातु वैरिभिर्दुःखैः पीड्यते हरिरक्षितः ॥ त्रिकाल पूजने शक्तैः कार्यं द्विः सकृदप्यदः ॥ विशेषेण यजेद्देवं संक्रांत्यादिषु पर्वसु ॥ दशभिः पंचभिर्वापि पूजयेदुपचारकैः ॥ अशक्तः कारयेत्पूजां दद्यादर्चनसाधनम् ॥ दानेशक्तः समर्चं तं पश्येत्तत्परमानसः ॥ पूजासाधनवस्तूनामभावान्मनसैव या ॥ पूजांभसा वा शुद्धेन साधनाभाविनी तु सा ॥ त्रस्तः संपूजयेद्देवं यथालब्धोपचारकैः ॥ मानसैवापि सा त्रासी ज्ञेया संपूर्णसिद्धिदा ॥ वालवृद्धाः स्त्रियो मूर्खा दुर्बोधास्तत्कृता तु या ॥ यथाज्ञानं सुरार्चा सा दौर्बोधी कीर्तिता बुधैः ॥ सूतकी तु नरः स्नात्वा कृत्वा संध्यां तु मानसीम् ॥ मानसैर्वार्चयेत्कामी निष्कामः सर्वमाचरेत् ॥ सौतक्युक्तातुरो रोगैर्न स्नायान्न च पूजयेत् ॥ विलोक्य मूर्त्तिं देवस्य यदि वा सूर्यमंडलम् ॥ सकृन्मूलमनुं जप्त्वा तत्र पुष्पं विनिक्षिपेत् ॥ तत्र रोगे गते स्नात्वा पूजयित्वा गुरून्द्विजान् ॥ पूजाविच्छेददोषो मे मास्त्विति प्रार्थयेत्तु तान् ॥ तेभ्यश्चाशिषमादाय देवेशं पूर्ववद्यजेत् ॥ स्वयं संपाद्य सर्वाणि श्रद्धया साधनानि च ॥ पूजयेत्तत्परो देवं स लभेताखिलं फलम् ॥ पूजनेन फलार्द्धं स्यादन्यदत्तैः सुसाधनैः ॥ तस्मात्स्वयं समानीय साधनान्यर्चनं चरेत् ॥ देवपूजाविहीनो यः स नरो नरकं प-

चेत्॥यथाकथंचिद्देवार्चां विधेया श्रद्धया ततः ॥ एवं संपूज्य देवेशं ब्रह्मयज्ञं समाचरेत् ॥ योगक्षेमं ततः कृत्वा मध्याह्ने स्नानमाचरेत् ॥ स्मार्तं तांत्रं च पूर्वोक्तं संध्यातर्पणमप्यथ॥ संपूज्य पूर्ववद्देवं वैश्वदेवादिकं चरेत् ॥ देवप्रसादं भुंजीत संपूज्य ब्राह्मणोत्तमान् ॥ आचम्य देवं संस्मृत्य पुराणं शृणुयात्सुधीः ॥ संध्यां होमं च निर्वृत्य देवं संपूज्य पूर्ववत् ॥ शयीत शुद्धशय्यायां भुक्त्वाल्पं देवतां स्मरन् ॥ इति पूजाकल्पे प्रथमभागः ॥

## अथ द्वितीयभागकृत्यम् ।

दक्षः ॥ द्वितीये च तथा भागे वेदाभ्यासो विधीयते ॥ वेदाभ्यासः पंचधेत्युक्तमाचारमयूखेपड्त्रिंशन्मते ॥ वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ॥ तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पंचधा ॥ कौर्म्ये ॥ जपेदध्यापयेच्छिष्यान्धारयेद्वा विचक्षणः॥अवेक्षेत च शास्त्राणि धर्मादीनि विचारयेत्॥ योगी ॥ यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ॥ वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ वेदाध्ययने फलमाह ॥ यंयं क्रतुमधीयीत तस्यतस्याप्नुयात्फलम् ॥ त्रिर्वित्तपूर्णापृथिवीदानस्य फलमश्नुते ॥ लिंगपुराणे ॥ यथैव वह्निसंपर्कान्मलं त्यजति कांचनम् ॥ तथैव गुरुसंपर्कात्पापं त्यजति मानवः ॥

## अथ तृतीयभागकृत्यम् ।

दक्षः ॥ तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ॥ पो-

प्यवर्गमाह॥ माता पिता गुरुर्भार्या प्रजाहीनः समाश्रितः॥ अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः॥ अध्यापनमध्ययनं यजनं याजनं तथा॥ दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः॥ याज्ञवल्क्यः॥ प्रधानं क्षत्रिये कर्म प्रजानां प्रतिपालनम्॥ कुसीदकृषिवाणिज्यं पाशुपाल्यं विशः स्मृतम्॥ अतः परं गृहस्थस्य कर्माचारं कलौयुगे॥ संप्रवक्ष्याम्यहं पुण्यं पराशरप्रचोदितम्॥ षट्कर्मरहितो विप्रः कृषिकर्म समाचरेत्॥ स्वयं कृष्टे तथा क्षेत्रे धान्यैश्च स्वयमर्जिते॥ निर्वपेत्पंचयज्ञांस्तु क्रतुदीक्षां च कारयेत्॥ कूर्मपुराणे॥ देवेभ्यश्च पितृभ्यश्च दद्याद्भागं तु विंशकम्॥ त्रिंशद्भागं तु विप्राणां कृषिं कृत्वा न दोषभाक्॥ पराशरः॥ यो न दद्याद्द्विजातिभ्यो राशिमूलमुपागते॥ सचौरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत्॥ मनुः॥ वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः॥ परधर्मेण जीवन्हि सद्यः पतति जातितः॥ बृहस्पतिः॥ अजीवत्कर्मणा स्वेन विप्रः क्षात्रं समाचरेत्॥ वैश्यकर्माथ वा कुर्यान्नृपलं परिवर्जयेत्॥ कूर्मपुराणे॥ कुसीदं कृषिवाणिज्यं प्रकुर्वीत स्वयंकृतम्॥ कृषेरभावे वाणिज्यं तदभावे कुसीदकम्॥ मनुः॥ ब्राह्मणः क्षत्रियो वापि वृद्धिं नैव प्रयोजयेत्॥ कामं तु खलु धर्मार्थं दद्यात्पापीयसेऽल्पिकाम्॥ ततः ब्राह्मणान्गावः गुरून् पितॄंश्च संपूज्य किंचिद्द्रव्यं ब्राह्मणाय दत्त्वा दर्पणमणिघृताग्निदूर्वामंगलद्रव्याणि दृष्ट्वा अध्ययनाध्यापनाभ्यां वेदमभ्यस्य कुटुंबरक्षणार्थं अ-

नेपिद्धजीविकया धनमर्जयित्वा मध्याह्न विधिना समाचरेत्॥ अथातो नित्यस्नानं विधास्यत इति सूत्रशेषः ॥ अथेति श्रौतस्मार्त्तक्रियानुष्टानविधानानंतर्यमाह ॥ अतो हेतोर्यतस्ताःक्रियाःस्नानपूर्वकाःअतोहेतोःस्नानविधानमावश्यकं कार्म्यं नैमित्तिकस्नानव्युदासार्थं नित्यशब्दोपादानम् ॥ विधास्यतइति शिष्यबुद्धिसमाधानार्थं प्रतिज्ञाकरणम् ॥स्नानमिति विधिनाबहिःसर्वांगजलसंयोगः॥तथाच शंखः॥अस्नातश्च पुमान्नार्हो जपाग्निहवनादिषु॥प्रातःस्नानं तदर्थं वै नित्यस्नानं प्रकीर्तितम् ॥ पुण्यस्नानादिकं स्नानं दैवज्ञविधिनोदितम् ॥ तद्धि काम्यं समुद्दिष्टं नाकामस्तुप्रयोजयेत् ॥ स्मृतिसारे ॥ ग्रहणोद्वाहसक्रांतौ यात्रादौ प्रसवेषु च ॥ स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥ इदं त्रिकांडिसूत्रं मध्याह्नस्नानपरम् ॥ यतः प्रातःस्नानं तिलहीनं अत्र तु कात्यायनाचार्यैस्तिलाहरणमुक्तम् ॥ अतः मध्याह्नस्नानपरमेवेति तथा स्मृतिसमुच्चये ॥ प्रातःस्नाने न कर्त्तव्यं कदाचित्तिलतर्पणम् ॥ जलमध्ये स्थितः कुर्यात्केवलं कुशवारिणा ॥ शौनकोपि ॥ प्रातःस्नाने विशेषोऽयं तद्दिवैव तिलैर्युतम् ॥ नित्यं नैमित्तिकं काम्यं तिलैरेव विधीयते॥अन्यच्च॥ यथाहनि तथा प्रातर्नित्यं स्नायादनातुरइति वचनात्प्रातःस्नानेप्यस्य विधेः प्राप्तौ स्वयमेव साग्निकानां प्रातःस्नाने विस्तरनिषेधमपि वदंति कात्यायनचरणाः ॥ अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्मणः॥प्रातर्न तनुयात्स्नानं होम-

लोपो हि गर्हितः ॥ इति व्यासः ॥ प्रातः संक्षेपतः स्नानं शौचं कुर्याद्यथाविधि ॥ विधिमात्रसमायुक्तं मध्याह्ने तु सविस्तरम् ॥ मनुः ॥ स्नानार्हस्तु निमित्तेन कृत्वा तोयावगाहनम् ॥ आचम्य प्रयतः पश्चात्स्नानं विधिवदाचरेत् ॥ अस्पर्शस्पर्शादिनिमित्तेनेत्यर्थः॥ नदीसरिद्देवखातगर्तप्रस्रवणेषु च ॥ सरस्सु चाकृत्रिमेषु शस्तं तीर्थे विशेषतः ॥ अत्रिः ॥ अलाभे देवखातानां ह्रदानां सरितां तथा ॥ उद्धृत्य चतुरः पिंडान्पारक्ये स्नानमाचरेत् ॥ पारक्यं अनुत्सृष्टं जलम् ॥ एवं स्नानादिकरणमुक्तमिदानीं स्नानोपकरणाहरणमाह ॥ मृद्गोमयकुशतिलसुमनस आहृत्य ॥ मृदादीन्स्वयमेव आनयेत् ॥ तथाशंखः ॥ समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत्॥ शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्व्रजत्यधः॥धर्मार्जितधनक्रीतैर्यः कुर्याद्देवतार्चनम् ॥ उद्धरिष्यत्यसंदेहः सप्त पूर्वांस्तथा परान् ॥ स्मृतिसारे ॥ यदि स्नातो द्विजस्तीर्थादगृहीतकमंडलुः॥अज्ञानाद्गृहमागच्छेत्स्नानं तस्य वृथा भवेत् ॥ यमः ॥ आहरेन्मृत्तिकां प्राज्ञः कूलतः सरितां स्तथा ॥वापीकूपतडागेभ्यो नाहरेद्बाह्यतो मृदम् ॥ दक्षः ॥ मृत्तिकासु च न ग्राह्या वल्मीकान्मूषकस्थलात् ॥अंतर्जलाच्च मार्गाच्च वृक्षमूलात्सुरालयात्॥याअन्यशौचावशिष्टा च श्रेयस्कामैः सदा बुधैः॥मृत्तिकां गोमयं दर्भान्पुष्पाणि सुरभीणि च ॥ आहरेत्स्नानकाले तु स्नानार्थं प्रयतः शुचिः॥एवं स्नानोपकरणाहरणमुक्त्वेदानीं जलसमीपे गमनपूर्वकं स्नानमि-

कटिं सकृन्मृदालिप्य द्विः प्रक्षाल्य च मृदालंभपूर्वकं वार-द्वयं तथैव कटिं क्षालयित्वा एवमेव वस्त्यादीनि क्रमेणै-कैकशः प्रक्षाल्य ततोधमांगप्रक्षालनसंभवप्रायश्चित्तशुद्ध्यर्थ माचमनं चरेत् ॥ याज्ञवल्क्यः ॥ अधमोत्तममध्यानामंगानां क्षालनं तु यत् ॥ भागैः पृथक्पृथक्कुर्यात्क्षालने मृदसं करः ॥ वसिष्ठः ॥ मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभिस्त स्थोपरि॥मृद्भिरद्भिश्च गात्राणि क्रमेण चावनेजयेत्॥नभस्यो दकमालभेदंगानि मृदेदंविष्णुरिति ॥ उदकाय नमः ॥ इति तीर्थोदकं नमस्कृत्य ॥ इदं विष्णुरित्यनयर्चा दक्षिणपाणि-गृहीतया मृदा शिरःप्रभृतिनाभिपर्यंतानि सव्यहस्तगृहीत-या नाभिप्रभृतिपादपर्यंतानि प्रातिलौम्येनालभेत् लिंपेत् आ लभेन्मृदांगानि इदंविष्णुरित्यृचेति मेधातिथिऋषिः छंदोगा यत्री विष्णुर्देवता ॥ इदं विष्णुरनेन त्रिर्मृदालंभनमाचरेत् ॥ योगिवचनाद्यजुषो निरासः ॥ प्रचेताः ॥ धर्मविद्दक्षिणं हस्तं नाधः शौचे नियोजयेत् ॥ तथैव वामहस्तेन नाभेरूर्ध्वं न च स्पृशेत् ॥ इति तन्मृदालंभनं शिरःप्रभृतिनाभिपर्यंता-नामेवेति केचित् ॥ कट्यादीनां पूर्वमेव क्षालितत्वात् ॥ अ-त्र चैवं विभागः ॥ मृत्तिकां त्रेधा विभज्य एकभागेन पाणि पादप्रक्षालनम् ॥ कट्यादीनां द्वितीयेन ॥ इदानीं तृतीयेने-ति ॥ सूर्याभिमुखो निमज्जेदापो अस्मानिति ॥ ततः शनैः नाभिमात्रं जलं प्रविश्य सूर्याभिमुखः सन् आपो अस्मानि-त्यृचामज्जेत॥शिरसा जलमवगाहयेत् ॥ प्रचेताः ॥आपोअ-

स्यानित्यनुष्टुप्प्रजापतिर्ऋषिः स्मृतः ॥ आपोऽस्य देवता स्नाने विनियोगः प्रकीर्तितः॥नाभिमात्रे जले स्थित्वा केशान्कृत्वा द्विधा द्विजः ॥ निरुध्य कर्णौ नासां च त्रिःकृत्वा मज्जनं चरेत् ॥ मनुः ॥ या याः समुद्रगा नद्यस्तासु स्नानं सुसन्मुखम् ॥ सर्वेपि शाखिनः कुर्युः विना वाजसनेयिनः ॥ वाजिसनेयिभिः सर्वत्र सूर्याभिमुखेनैव कार्यमित्यर्थः ॥ स्नात्वोदिदाभ्य इत्युन्मज्ज्यनिमज्ज्योन्मज्ज्याचम्य ॥ अशोधने अंगानि संशोध्य उदिदाभ्यःशुचिरिति मंत्रांते उन्मज्ज्योत्क्रम्यपुनस्तूष्णीं निमज्ज्य स्नात्वोन्मज्ज्य तथैवोत्क्रम्याचामेत्॥गोमयेन विलिप्य मानस्तोके इत्यनयर्चा गोमयेन शिरः प्रभृति सर्वण्यंगान्यनुलिंपेत्॥अत्रापि नाभेरूर्ध्वं दक्षिणहस्ते नाधःसव्येन ॥ त्रिष्टुप्छंदः कुत्स ऋषि देवता रुद्र ईरितः ॥ मा नस्तोकेति मंत्रस्य गोमयालंभने स्मृतम्॥अत्र विशेषमाह विष्णुः॥अग्रमग्रमिति स्मृत्वा मानस्तोकेनवा पुनः॥ गोमयै र्लेपयत्प्राज्ञः सोदकैर्भानुवासरे ॥ रौद्रमंत्राभिधानादपः स्पृशेत् ॥ योगी ॥ गोमयेन तु यो लिंपेदापादतलमस्तकम्॥स स्नातः सर्वतीर्थेषु पूतः संवत्सरं भवेत् ॥ ततोऽभिषिंचेदिमं मे वरुणेति चतसृभिर्माप उदुत्तमं मुंचंत्ववभृतेति॥ ततः गोमयेनलेपनानंतरं ॥ इमम्मे वरुणेत्येवमादिभिश्चतसृभिर्ऋग्भिः ॥ मापो मौषधिरित्येकया॥उदुत्तममिति मुंचंतु मेति अवभृथेति च क्रमेण प्रतिमंत्रमभिषिंचेत् ॥ अंजलिना जलं मूर्द्ध्निक्षिपेदित्यर्थः ॥ तथाच योगी ॥ कार्योऽभिषेकोऽ

जलिना इमम्मेत्याद्यष्टभिरिति ॥ दक्षिणतुलुकेनेति हरिहरः कुंभमुद्रयेतिमांत्रिकाः ॥ अत्र पाठक्रमादेवानुलेपनमन्त्राभिषेकप्राप्तौ ततः शब्देनानुलिप्तगात्रस्यैवाभिषेकइति प्राप्यते ॥ अंते चेत् एतदष्टभिर्ऋग्भिरभिषेचनमतेऽपि कर्तव्यम्॥ निमज्ज्योन्मज्ज्याचम्य दर्भैः पावयेत् ॥ निमज्ज्य तूष्णीं मज्जयित्वा उन्मज्ज्योत्क्रम्याचमनं कृत्वा दर्भैः दक्षिणहस्ते गृहीतैः प्रादक्षिण्येन नाभेरूर्ध्वं शिरो यावत्ततः पुनर्नाभिपर्यंतं पावयेत् ॥ तदुक्तम् ॥ दर्भैरुन्मार्जनं नाभेरुपरिष्टात्प्रदक्षिणम् ॥ इदं पावनमद्भिश्च कुशैरच्छिन्नमूलकैः ॥ अभिषिच्य तथात्मानं निमज्याचम्य वै पुनः ॥ दर्भैस्तु पावयेन्मंत्रैर्ऋग्भिः पावनैः शुभैः ॥ आपोहिष्ठेति तिसृभिरिदमापो हविष्मतीर्देवीराप इति द्वाभ्यां मापो देवो द्रुपदादिव शन्नोदेविरपास्समपो देवीः पुनंतु मेति नवभिश्चित्पतिर्मेति ॥ आपोहिष्ठेत्यादिभिश्चित्पतिर्मेत्यंतैर्यथाक्रमपाठितैर्मंत्रैः पावयेदित्यर्थः॥ ॐकारेण व्याहृतिभिर्गायत्र्यादावंते च ॥ ॐ कारेण तिसृभिर्व्याहृतिभिर्गायत्र्या आपोहिष्ठेत्यस्यादौ चित्पतिर्मेत्यस्यांते च पावयेदित्यन्वयः ॥ योगी ॥ ॐ कारेण व्याहृतिभिर्गायत्र्या च समाहितः ॥ आदावंते च कुर्वीत मार्जनं तु यथाक्रमम् ॥ अंतर्जलेघमर्षं त्रिरावर्तयेत् ॥ अंतर्जले जलमध्ये मग्नः सन् ॥ अघं मृष्यते येन तदघमर्षणं ऋतं च सत्यं चेत्येतत्सूक्तं त्रिरावर्तयेत् ॥ त्रिवारं जपेत् ॥ चतुर्विंशतिमते ॥ ततोऽङ्गुष्ठांगुलिभिस्तु

श्रोत्रदृङ्नासिकामुखम् ॥ पिधायांतः प्रतिश्रोतास्त्रिर्जपेदघ मर्षणम् ॥ कात्यायनः ॥ अघमर्षणसूक्तं तु अश्वमेधावभृत्सम म् ॥ अंतर्जले त्रिरावृत्य मुच्यते ब्रह्महत्यया ॥ द्रुपदादिवायं गौरिति वाऽभ्यप्रणामं वा सशिरसं ॥ यद्वा द्रुपदादिवेत्यृचं ॥ आयं गौरिति वा त्र्यृचं ॥ शिरसा आपो ज्योतिरिति मंत्रेण सह प्राणायामं वा त्रिरावर्तयेदित्यनुषंगः ॥ एतेषां शक्तिश्रद्धापेक्षया विकल्पः ॥ व्यासः ॥ द्रुपदानाम सा देवी या देवी तैत्तिरीयके॥अंतऽर्जले संकुज्जप्त्वा ब्रह्महत्य व्यपोहतु ॥ स्मृत्यंतरे ॥ द्रुपदानाम गायत्री वेदवाजसनेयके ॥ पंच जप्त्वा जले मग्नो मुच्यते सर्वपातकैः ॥ तथा ॥ आयंगौ० ॥ स व्याहृतिं सप्रणवां गायत्रीं शिरसा सह ॥ त्रिः पठेत्तु जले मग्नः सर्वपापैः प्रमुच्यते ॥ उष्णाधिकरणे प्रत्याह ॥ ॐ इति वा विष्णोर्वा स्मरणम् ॥ ओमित्यनेन त्रिरावर्तयेत् ॥ व्यासः ॥ आवर्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययम् ॥ वसिष्ठः ॥ प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः ॥ ब्राह्मणं प्रणवः सर्वं तस्मात्प्रणवमभ्यसेत् ॥ एकाक्षरं परं ब्रह्म पावनं परमं स्मृतम् ॥ सर्वेषामेव पापानां संकरे समुपस्थिते ॥ नारदीये ॥ सर्वं जगदिदं विष्णुर्विष्णुः सर्वस्य कारणम् ॥ अहं च विष्णुरिति यत्तद्विष्णुःस्मरणं विदुः ॥ अघमर्षणानंतरं पुनस्तूष्णीं त्रिवारं मज्जयित्वा स्नानांगतर्पणं कुर्यात् ॥ अत्र प्रचेताः॥अघमर्षणत्रयेण धूतः पापः समाहितः॥ततो निमज्ज्य वारांस्त्रींस्ततस्तर्पणमाचरेत् ॥ द-

जलिना इमम्मेत्याद्यष्टभिरिति ॥ दक्षिणचुलुकेनेति हरिहरः कुंभमुद्रयेतिमांत्रिकाः ॥ अत्र पाठक्रमादेवानुलेपनमन्वाभिषकप्राप्तौ ततः शब्देनानुलिप्तगात्रस्यैवाभिषेकइति प्राप्यते ॥ अंते चेत् एतदष्टभिर्ऋग्भिरभिषेचनमंतेऽपि कर्तव्यम् ॥ निमज्ज्योन्मज्ज्याचम्य दर्भैः पावयेत् ॥ निमज्ज्य तूष्णीं मज्जयित्वा उन्मज्ज्योत्क्रम्याचमनं कृत्वा दर्भैः दक्षिणहस्ते गृहीतैः प्रादक्षिण्येन नाभेरूर्ध्वं शिरो यावत्ततः पुनर्नाभिपर्यंतं पावयेत् ॥ तदुक्तम् ॥ दर्भैरुन्मार्जनं नाभेरुपरिष्टात्प्रदक्षिणम् ॥ इदं पावनमद्भिश्च कुशैरच्छिन्नमूलकैः ॥ अभिषिच्य तथात्मानं निमज्याचम्य वै पुनः ॥ दर्भैस्तु पावयेन्मंत्रैर्ऋग्भिः पावनैः शुभैः ॥ आपोहिष्ठेति तिसृभिरिदमापो हविष्मतीर्देवीराप इति द्वाभ्यां मापो देवो द्रुपदादिव शन्नोदेवीरपांरसमपो देवीः पुनंतु मेति नवभिश्चित्पतिर्मेति ॥ आपोहिष्ठेत्यादिभिश्चित्पतिर्मेत्यंतैर्यथाक्रमं पठितैर्मंत्रैः पावयेदित्यर्थः ॥ ॐकारेण व्याहृतिभिर्गायत्र्यादावंते च ॥ ॐकारेण तिसृभिर्व्याहृतिभिर्गायत्र्या आपोहिष्ठेत्यस्यादौ चित्पतिर्मेत्यस्यांते च पावयेदित्यन्वयः ॥ योगी ॥ ॐकारेण व्याहृतिभिर्गायत्र्या च समाहितः ॥ आदावंते च कुर्वीत मार्जनं तु यथाक्रमम् ॥ अंतर्जलेऽघमर्षं त्रिरावर्तयेत् ॥ अंतर्जले जलमध्ये मग्नः सन् ॥ अघं मृष्यते येन तदघमर्षणं ऋतं च सत्यं चेत्येतत्सूक्तं त्रिरावर्तयेत् ॥ त्रिवारं जपेत् ॥ चतुर्विंशतिमते ॥ ततोऽङ्गुष्ठाङ्गुलिभिस्तु

श्रोत्रदृङ्नासिकामुखम् ॥ पिधायांतः प्रतिश्रौतस्त्रिर्जपेदघमर्षणम् ॥ कात्यायनः ॥ अघमर्षणसूक्तं तु अश्वमेधावभृत्समम् ॥ अंतर्जले त्रिरावृत्य मुच्यते ब्रह्महत्यया ॥ द्रुपदादिवायं गौरिति वाच्यप्रणामं वा सशिरसं ॥ यद्वा द्रुपदादिंवेत्यृचं ॥ आयं गौरिति वा त्र्यृचं ॥ शिरसा आपो ज्योतिरिति मंत्रेण सह प्राणायामं वा त्रिरावर्तयेदित्यनुषंगः ॥ एतेषां शक्तिश्रद्धापेक्षया विकल्पः ॥ व्यासः ॥ द्रुपदानाम सा देवी या देवी तैत्तिरीयके॥अंतऽर्जले सकृज्जप्त्वा ब्रह्महत्यं व्यपोहतु ॥ स्मृत्यंतरे ॥ द्रुपदानाम गायत्री वेदवाजसनेयके ॥ पंच जप्त्वा जले मग्नो मुच्यते सर्वपातकैः ॥ तथा ॥ आयंगौ० ॥ स व्याहृतिं सप्रणवां गायत्रीं शिरसा सह ॥ त्रिः पठेत्तु जले मग्नः सर्वपापैः प्रमुच्यते ॥ उष्णाधिकरणे प्रत्याह ॥ ॐ इति वा विष्णोर्वा स्मरणम् ॥ ओमित्यनेन त्रिरावर्तयेत् ॥ व्यासः ॥ आवर्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययम् ॥ वसिष्ठः ॥ प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः ॥ ब्राह्मणं प्रणवः सर्वं तस्मात्प्रणवमभ्यसेत् ॥ एकाक्षरं परं ब्रह्म पावनं परमं स्मृतम् ॥ सर्वेषामेव पापानां संकरे समुपस्थिते ॥ नारदीये ॥ सर्वं जगदिदं विष्णुर्विष्णुः सर्वस्य कारणम् ॥ अहं च विष्णुरिति यत्तद्विष्णुःस्मरणं विदुः ॥ अघमर्षणानंतरं पुनस्तूर्ष्णीं त्रिवारं मज्जयित्वा स्नानांगतर्पणं कुर्यात् ॥ अत्र प्रचेताः॥अघमर्षणत्रयेण धूतः पापः समाहितः॥ततो निमज्ज्य वारांस्त्रींस्ततस्तर्पणमाचरेत् ॥ द-

क्षोऽपि ॥ नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमाचरेत् ॥ तर्पणं तु भवेत्तत्र अंगत्वेनोपपद्यते ॥ पराशरः ॥ बाहुं पूर्णंतिलैः कृत्वा जलस्थस्तर्पयेत्पितॄन् ॥ स्थलस्थेन प्रकर्त्तव्यं पितॄणां तृप्तिमिच्छता ॥ गोभिलः ॥ भूम्यां यद्दीयते तोयं यदा चैव जले स्थितः ॥ वृथा तन्मुनिशार्दूल नोपतिष्ठति कस्यचित् ॥ पटे तटेऽश्मनी पात्रे रोमकूपेषु ये तिलाः ॥ ते तिलाः कृमिसंयुक्तास्तज्जलं रुधिरायते ॥ निषेधस्तु मुख्यतर्पण एव ॥ स्मृतिसारे ॥ संक्रांत्यादिनिमित्तेषु स्नानांगतर्पणे द्विजाः ॥ तिथिवारनिषिद्धेऽपि तिलैस्तर्पणमाचरेत् ॥ अयं नियमः प्रातःस्नानांगव्यतिरिक्तस्नानांगतर्पण एव ॥ प्रातःस्नाने न कर्तव्यः ॥ स्मृतिसमुच्चये ॥ उद्धृतैरुदकैः स्नातो नद्यादावन्यथा पुनः ॥ स्नानांगतर्पणं विद्वान्कदाचिन्नैव हापयेत् ॥ अस्पर्शस्पर्शने वांते अश्रुपाते क्षुरे भगे ॥ स्नानं नैमित्तिकं कार्यं देवपित्र्यविवर्जितम् ॥ आदित्यपुराणे ॥ मृताः कालवशाद्राजन्निर्जने काष्ठलोष्ठवत् ॥ त्यक्त्वा स्नानं तु कर्तव्यं देवपित्रा विवर्जितम् ॥ सत्यव्रतः ॥ जस्वानेन विधानेन देवर्षिपितृतर्पणम् ॥ नृस्वशाखा विहितं कुर्यात्स्नानांगं पृथगेव हि ॥ स्नानात्तु तर्पयेद्देवान् ऋषीन्पितृगणानपि ॥ स्वसूत्रेण च मार्गेण पुनराचम्य वाग्यतः ॥ योगी ॥ स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः ॥ कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥ बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम् ॥ तस्य तावति शास्त्रार्थे

कृते सर्वं कृतो भवेत् ॥ गृह्यसंग्रहकारः ॥ यः स्वशाखोक्त मुत्सृज्य परशाखोक्तमाचरेत् ॥ अप्रमाणमृषिं कृत्वा सोऽंधे तमसि मज्जति ॥ ॥ इति मध्याह्नस्नानविधिः ॥

## अथ प्रयोगः ॥

तत्राष्टधा विभक्तस्य दिवसस्य चतुर्थभागे मृद्गोमयकुशतिलाक्षतपुष्पवस्त्रयुग्मोदकपात्रादीनि स्नानोपकरणान्यादाय महानदीदेवखाततडागाद्युदकाश्रयं गत्वा हस्तेन तटं प्रक्षाल्य भूमौ मृद्गोमयादीनि पृथक्पृथक्स्थापयेत् ॥ ततः मृज्जलाभ्यां पादौ प्रक्षाल्य पाण्योः प्रक्षालनं स्नानवस्त्रक्षालनं च ॥ कुशोपग्रथितपवित्रधारणम् ॥ गायत्र्या मानस्तोकेति मंत्रेण वा शिखैकदेशबंधनम् ॥ यज्ञोपवीत्याचम्य ॥ त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता ॥ याचितं तीर्थं मे देहि सर्वपापैः प्रमुच्यते ॥ ततस्त्रिः प्राणानायम्य देशकालौ संकीर्त्य ॥ ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं मध्याह्नस्नानमहं करिष्य इति यवकुशजलैः संकल्प्य ॥ उरूंहि इति तोयमामंत्र्य ॥ उरूंहीतिमंत्रस्य शुनः शेप ऋषिः त्रिष्टुप्छंदः वरुणो देवता तोयाभिमंत्रणे विनियोगः ॥ॐ उरूंहिरा० ॥ आवर्तयेद्ये ते शतमिति ॥ येतेशतमित्यस्य विश्वामित्र ऋषिः त्रिष्टुप्छंदः वरुणो देवता तोयावर्तने विनियोगः ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा विततामहांतः ॥ तेभिर्नोअद्यसवितोत विष्णुर्विश्वे मुंचंतु मरुतः

स्वर्काः ॥ सुमित्रियानइत्यपोंजलिनादाय ॥ सुमित्रियाइत्य
स्य प्रजापतिर्ऋषिः यजुश्छंदः आपो देवता अंजलिग्रहणे
विनियोगः ॥ ॐ सुमित्रियानऽआपओषधयः संतु दुर्मित्रि
याइति द्वेषं प्रति निषिंचेत् ॥ दुर्मित्रिया इत्यस्य प्रजापति-
र्ऋषिः यजुश्छंदः आपो देवता द्वेष्यं प्रत्युदकनिषिंचने वि-
नियोगः ॥ ॐ दुर्मित्रियास्तस्मै० द्विष्मः ॥ कटिं बस्त्यूरू
जंघे चरणौ करौ मृदा त्रिस्त्रिः प्रक्षाल्याचम्य ॥ उदकाय न-
मः ॥ इति तीर्थोदकं नमस्कुर्यात् ॥ अश्वक्रांते उद्धृतासीति
द्वयोर्वामदेव ऋषिः अनुष्टुपछंदः मृद्देवता मृदभिमंत्रणग्रह-
णयोर्विनियोगः ॥ ॐ [illegible]
मृत्तिके हर मे पापं [illegible]
रोहेण कृष्णेन शतबाहुना ॥ मृत्तिके ब्रह्मदत्तासि काश्यपेना
भिमंत्रिता ॥ २ ॥ मृत्तिके हरतत्सर्वं यन्मया दुष्कृतं कृतम्
मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥ त्वया हतेन
पापेन जीवामि शरदां शतमित्युक्त्वा हस्तस्थां मृदं सूर्याय
दर्शयेत् ॥ आलभेदंगानि मृदेदंविष्णुरिति ॥ इदं विष्णुरिति
मंत्रस्य मेधातिथिर्ऋषिः गायत्री च्छंदः विष्णुर्देवता मृदांगा
लंभने विनियोगः ॥ ॐ इदं विष्णुर्वि० ॥ अनया शिरःप्र-
भृतिनाभिपर्यंतानि गात्राणि दक्षिणहस्तगृहीतया लिपेत् ततः
सव्यहस्तगृहीतया नाभितःपादपर्यंतं च ततं आचम्य ॥
ततो नाभिमात्रे जले प्रविश्य ॥ सूर्याभिमुखो निमज्जेदापो
अस्मानिति ॥ आपो अस्मानित्यस्य हविर्द्धान ऋषिः त्रिष्टु

प्छंदः आपो देवता मज्जनेविनियोगः ॥ ॐ आपोअस्मा० प्रवहंति देवीः ॥ उदिदाभ्य इति प्रजापतिर्ऋषिः त्रिष्टुप् छंदः आपो देवता उन्मज्जने विनियोगः ॥ ॐ उदिदाभ्यः शुचिरा पूतएमि ॥ पुनस्तूष्णीं निमज्ज्योन्मज्जनम् ॥ आचमनम् ॥ पाणिभ्यां गोमयमादाय अग्रमग्रामित्यस्य विश्वामित्र ऋषिः जगती छंदः गोमयं देवता गोमयाभिमंत्रणे विनियोगः ॥ ॐ अग्रमग्रं चरंतीनामोषधीनां रसंवने ॥ तासामृषभपत्नीनां प वित्रं कायशोधनम् ॥ तन्मे रोगांश्च शोकांश्च पापं मे हर गो-मयेतिगोमयेन विलिंपेन्मानस्तोकइति ॥ मानस्तोकेति मंत्रस्य कुत्स ऋषिः जगती छंदः रुद्रो देवता गोमयेन गात्रलेपनेविनियोगः ॥ ॐ मानस्तोके त० ॥ अनेन शिरःप्रभृतीनि पादपर्यंतानि सर्वांगाण्युपलिंपेत् ॥ पुनस्तू-ष्णीं निमज्ज्योन्मज्जनमाचमनम् ॥ ततोऽभिषिंचेदिमम्मे व-रुणेतिं चतसृभिर्मापं उदुत्तमं मुंचंत्ववभृथेत्यंते चैततं ॥ इ-मंम्मे तत्त्वायामीति द्वयोः शुनःशेप ऋषिः गायत्री छंदः वरुणो देवता अभिषेके विनियोगः ॐ इमंम्मे वरुण० ॥ ॐ तत्त्वायामि०॥ त्वन्नः सत्वन्नः इत्यनयोः वामदेव ऋषिः त्रिष्टुप् छंदः अग्नीवरुणौ देवते अभिषेके विनियोगः ॥ ॐ त्वन्नो अग्ने० ॐ सत्वन्नो अग्ने व० ॥ मापोमौषधीरित्यस्य प्रजापतिर्ऋषिः अनवसाना गायत्री छंदः हृदयशूलो देव-ता ॥ अभि० ॥ ॐ मापो मौषधी० ॥ उदुत्तममिति शुनः शेप ऋषिः त्रिष्टुप् छंदः ओषधयो देवताः अभिषे० ॥ ॐ

उदुत्तमं वरु० मुंचंत्विति अथर्वण ऋषिः अनुष्टुप् छंदः ओषधयो देवताः अभिषे० ॥ ॐ मुंचंतु० ॥ अवभृथेति प्रजापतिर्ऋषिः यजुश्छंदः यज्ञो देवता अभिषे० ॥ ॐ अवभृथनिचुं० ॥ ८ ॥ ततस्तूष्णीं निमज्योन्मज्याचम्य कांडात्कांडादयाद्यमिति मंत्रद्वयं श्रावणीकर्मविषयम् ॥ तयोः विश्वामित्र ऋषिः अनुष्टुप् छंदः दूर्वेष्टका अपामार्गो देवते मार्जने विनियोगः ॥ दर्भैः पावयेत् ॥ तत्प्रकारस्तु त्रिभिर्दर्भैः साग्रैर्दक्षिणहस्तधृतैः सोदकैर्नाभेरारभ्य प्रदक्षिणनाभिपर्यंतं स्वशरीरं वक्ष्यमाणमंत्रैरापोहिष्ठेत्यादिभिः प्रार्थयेत् ॥ आपो हिष्ठेति तिसृभिरिदमापोहविष्मतीर्देवीराप इति द्वाभ्यामपो देवा द्रुपदा दिव शन्नो देवीरपा ॐ रसमपो देवीः पुनंतुमेति नवभिश्चित्पतिमैत्योंकारेण व्याहृतिभि र्गायत्र्या चादावंते च ॥ ॐ भूः पुनात्वित्यादिसर्वं पुनातु ॥ आपो हिष्ठेति तिसृणां सिंधुद्वीप ऋषिः गायत्री छंदः आपो देवता पावने विनियोगः ॥ ॐ आपो हि ष्ठा० ॥ ॐ योवः शिव० ॥ ॐ तस्मा अरं गमा० ॥ इदमाप इत्यस्य प्रजापतिर्ऋषिः पंक्तिश्छंदः आपो देवता पाव० ॥ ॐ इदमापः प्र० हविष्मतीरित्यस्य प्रजापतिर्ऋषिः अनुष्टुप् छंदः आपो यजमानोऽध्वरः सूर्यश्च देवताः पाव० ॥ ॐ हविष्मती० ॥ देवीराप इति प्रजापतिर्ऋषिः पंक्तिश्छंदः आपो देवता पावने० ॥ ॐ देवीरापो अपा० ॥ कार्षिरसीति प्रजापतिर्ऋषिः

अनुष्टुप् छंदः आज्यं देवता पावने० ॥ ॐ कार्षि रासि स०॥ आपो देवा इति वरुण ऋषिःअनुष्टुप्छंदःआपो देवता पावने विनियोगः ॐ आपोदे वामधु० ॥ द्रुपदादिवेति कोकिलरा जपुत्र ऋषिः अनुष्टुप् छंदः आपो देवता पावने० ॥ ॐ द्रुपदादिं व० ॥ शन्नोदेवीरित्यस्य दध्यङ्ङाथर्वण ऋषिः गायत्री छंदः आपो देवता पाव० ॥ ॐ शन्नो देवीर० ॥ अपाᳬ रसमिति बृहस्पतिर्ऋषिः अनुष्टुप्छंदः रसो देवता पाव० ॐ अपाᳬ रसमु० ॥ आपो देवीरित्यस्य सिंधुद्वीप ऋषिः बृहती छंदः आपो देवता पाव० ॥ ॐ आपो देवी-रुपसृ० ॥ पुनंतु मेति प्रजापत्याश्विनीसरस्वतींद्राऋषयः अनुष्टुप् छंदः पितरो देवताः पा० ॥ ॐ पुनंतु मा पि० ॥ अग्नऽआयूᳬषिइत्यस्य वैश्वानर ऋषिः गायत्री छंपः अग्नि-र्देवता पावने० ॥ ॐ अग्न आयूᳬषि पव० ॥ पुनंतु मेति प्रजापतिर्ऋषिः अनुष्टुप् छंदः देवजनविश्वभूतजातवेदसो देवताः पावने० ॥ ॐ पुनंतुमा देवज० ॥ पवित्रेणेत्यादीनां पंचानां प्रजापत्याश्विनी सरस्वतींद्रा ऋषयः चतसृणां गा-यत्री छंदः पंचम्याः त्रिष्टुप् छंदः यथाक्रमं अग्निर्ब्रह्मासोम-स्सविता विश्वेदेवा देवताः पावने विनियोगः ॥ ॐ पवित्रेण पुनीहि० ॥ यत्ते पवित्रमु० पवमानःस्हसो० उभाभ्यांदे वैश्वदेवीपु० ॥ चित्पतिर्मावाक्पतिर्मा देवो मेति त्रयाणां प्र-जापतिर्ऋषिः यजूंषि छंदांसि आद्ययोःप्रजापतिः तृतीयस्य

सविता देवता पावने विनि० ॥ याचित्पतिर्मा पुनात्वच्छि द्रे० ॥ वाक्पतिर्मा पुनात्वच्छि० ॥ देवो मा सवितापु० ॥ ततः पुनरपि ॐ कारेण व्याहृतिभिर्गायत्र्या च पावयेत् ॥ एवं पावयित्वा कुशान्परित्यज्य पूर्ववदिमम्मे इत्यादिभिरष्टभिर्मंत्रैरभिषिंचेत् ॥ ततोऽघमर्षणं अंतर्जलेऽघमर्षणं त्रिरावर्त्तयेत् ॥ ऋतं चेति तृचस्याघमर्षण ऋषिः अनुष्टुप् छंदः भावभृथो देवता अघमर्षणे विनियोगः ॥ ॐ ऋतं च सत्यं चा० ॥ ३ ॥ अपां मध्ये निमज्य अंगुष्ठांगुलिभिः श्रोत्रदृङ्नासिकामुखं पिधायाघमर्षणसूक्तं त्रिवर्जयेत् ॥ द्रुपदादिवायं गौरिति वा त्र्यृचं वा प्राणायामं वा शिरसम् ॥ द्रुपदादिवेति मंत्रेणायं गौरिति तृचेन प्राणायामेन वा विष्णोः स्मरणेन वाऽघमर्षणं कुर्यात् ॥ ततस्तूष्णीं त्रिवारं मज्जनं ततः स्नानांगतर्पणम् ॥ तत्र विशेषः ब्रह्मपुराणे ॥ ॐ मोदादयो देवास्तृप्यंताम् ॥ यज्ञोपवीती ॥ सनकादयो मनुष्यास्तृप्यंताम् अपसव्यम् ॥ कव्यवाडनलादयो दिव्यपितरस्तृप्यंताम् ॥ तर्पणार्हपितरस्तृप्यंताम् ॥ आब्रह्मस्तंबपर्यंतमित्यादि पूर्ववत् ॥ इति मध्याह्नस्नानप्रयोगः उत्तीर्य धौतवाससी परिधाय ॥ वस्त्रपरिधानानंतरं मृदोरू करौ च प्रक्षाल्य ॥ ततस्तीर्थमृत्तिकया भस्मना वा ऊर्ध्वपुंड्रं त्रिपुंड्रं वा यथाश्रद्धया पूर्ववत्कुर्यात् ॥

## अथ संध्याविधिः ॥

आचम्य त्रिरायम्यासून् ॥ कुशासने उपविष्टः सन् आचमनं कृत्वा त्रिवारान् असून् प्राणान् आयम्य सांनि-

कृष्य ॥ तथाचोक्तम् ॥ अथाचम्य कुशैर्युक्ते आसने समुपः स्थिते ॥ करसंपुटकं कृत्वा संध्यां नित्यं समाचरेत् ॥ बृहस्पतिः ॥ बद्धासनं तथाचम्य स्मृत्वाचार्यादिकं ततः ॥ संमीलितदृङ् मौनी प्राणायामान्समभ्यसेत् ॥ पुष्पाण्यंबुमिश्राण्यूर्ध्वं प्रक्षिप्य ॥ पुष्पाणि कुसुमान्यथ बिल्वादिपत्राण्यंबुमिश्राणि जलयुतान्यंजलिना गृहीत्वोर्ध्वं सूर्याभिमुखस्तिष्ठन् ॥ ॐ कारव्याहृतियुतगायत्र्योत्सृजेत् ॥ कौर्मे ॥ ॐ कारव्याहृतियुतां गायत्रीं वेदमातरम् ॥ कृत्वा जलांजलिं दद्याद्भास्करं प्रति जन्मना ॥ वेदमातरमुच्चार्येत्यऽध्याहारः ॥ प्रतिजन्मना द्विजन्मना ॥ मध्यान्हे तु सकृच्चैव क्षेपणीयं द्विजातिभिः ॥ मनुः ॥ तिष्ठन्नग्रः प्रभाते तु मध्याह्नेऋजुसंस्थितः ॥ उपस्पृशंस्तु सायाह्ने भूमावर्घ्यं विनिक्षिपेदिति ॥ ऊर्ध्वबाहुः सूर्यमुदीक्षन्नुद्वयमुदुत्यं चित्रंदेवा तच्चक्षुरिति गायत्र्या च यथाशक्ति विभ्राडित्यनुवाकपुरुषसूक्तशिवसंकल्पमंडलब्राह्मणैरित्युपस्थाय प्रदक्षिणीकृत्य नमस्कृत्योपविशेद्दर्भेषु ॥ ऊर्ध्वौ सूर्याभिमुखौ बाहू यस्यसः ऊर्ध्वबाहुः सूर्यमुदीक्षन् आदित्यमुदीक्षमाणः उद्वयमित्यादिभिर्ऋग्भिर्गायत्र्या च यथाशक्ति सहस्रं परमां देवीं शतमध्यां दशावरामित्यादिविभ्राडित्यनुवाकेन सहस्रशीर्षेत्यादिषोडशर्चेन पुरुषसूक्तेन यज्जाग्रतइत्यादिषडर्चेन शिवसंकल्पेन मंडलब्राह्मणेन च उपस्थाय सूर्यं स्तुत्वा त्रिः प्रदक्षिणीकृत्य कायवाङ्मनोभिः प्रणम्य आसनोपरि प्रागग्रेषु त्रिषु कुशेषु प्राङ्मुखउदङ्मुखो वा उप-

ता सूर्योपस्था० ॥ ॐ यज्जाग्रतो दूरमित्यारभ्य शिवसंकल्पमस्तु एतदंतं पठेत् ॥ यदेतन्मंडलेति विवस्वानृषिः गायत्रीछंदः वायुर्देवता सूर्योप० ॥ ॐ यदेतन्मण्डलं इत्यारभ्य मृत्युर्ह्यस्यात्मा भवति इत्येतदंतं एतैरुपस्थाय सूर्यं प्रदक्षिणीकृत्य नमस्कृत्य दर्भेषूपविशेत् ॥ त्रिराचम्यामूनित्यारभ्योपविशेदित्यनेन सूत्रसंलग्नेन कात्यायनाचार्येण संध्योपासनमुक्तम् अत एव माध्यंदिनानां स्वगृह्योक्तत्वाच्छाखानुष्ठानं सिद्धिकरम् ॥ यत्पुनः शाखांतराधिकरणन्यायेनेदमेव कल्पनं सूत्रकारप्रभृतिभिर्निबंधकारैराह्निकपद्धतिकारैश्च स्मृत्यंतरोक्तसंध्योपासनविधिसमुचितं लिखितम् तत्सर्ववेदशाखासाधारणत्वात् ॥ सर्वशाखिनामनुष्ठानमुचितम् ॥ इति संध्योपासनप्रयोगः ॥

## ततः ब्रह्मयज्ञं कुर्यात् ॥

तद्यथा ॥ दर्भपाणिः स्वाध्यायं च यथाशक्त्यादावारभ्य वेदम् ॥ उपग्रहातिरिक्तदर्भाः पाण्योर्यस्यासौ दर्भपाणिः सन् ॥ स्वाध्यायं ब्रह्मयज्ञं स्वशाखाध्ययनम् ॥ स्वशाखाध्ययनं विप्र ब्रह्मयज्ञ उदाहृतः इतिवचनात् ॥ चकारादन्यशाखाथर्वांगिरसपुराणेतिहासादीनां चाध्ययनं शक्त्यनुसारेण कुर्यात् ॥ किं तु आदौ आदितः आरभ्योपक्रम्य किं त्वेदं मंत्रब्राह्मणात्मकम् ॥ वेदमित्येकवचनमविवक्षितम् ॥ मनुः॥ ओंकारपूर्विकास्तिस्रो महाव्याहृतयो यथा॥त्रिपदा चैव गा-

यत्री विज्ञेयं ब्रह्मणो मुखम् ॥ ॐकारव्याहृतीस्तिस्रो गायत्रीं त्रिपदां तथा ॥ मनसैवमनुस्मृत्य ततो वेदादिमारभेत् ॥ याज्ञवल्क्यः ॥ आदावारभ्य वेदं तु स्नात्वोपर्युपरि क्रमात् ॥ यदधीतेन्वहं शक्त्या स स्वाध्याय इति स्मृतः ॥ यस्तु श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्तु स स्मृतः ॥ स चार्वाक्तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ॥ वैश्वदेवावसाने वा नान्यत्रेत्यनिमित्तकात् ॥ कौर्मे ॥ यदि स्यात्तर्पणादर्वाग्ब्रह्मयज्ञः कृतो नदीम् ॥कृत्वा मनुष्ययज्ञं तु ततः स्वाध्यायमारभेदिति अथ ब्रह्मयज्ञप्रयोगः ॥ स्वासनोपरि प्रागग्रान्दर्भानास्तीर्य तत्र प्राङ्मुखोदङ्मुखोपविश्य दर्भपवित्रपाणिराचम्य देशकालौ संकीर्त्य ॥ श्रीपरमेश्वरप्रीत्यर्थं यथाशक्ति ब्रह्मयज्ञमहं करिष्ये ॥ दक्षिणपादोपरि वामपादं व्यस्तं निधाय ततः ब्रह्मयज्ञारंभे यथाविधि स्नात्वा छंदः पुरुषमेनो निर्णोदन *शरीरे न्यसेत् ॥ तद्यथा ॥ तिर्यग्बिलश्चमस ऊर्ध्वबुध्नाय नमः मुखे ॥ ॐ गौतमभरद्वाजाभ्यां नमः नेत्रयोः ॥ ॐ विश्वामित्रजमदग्निभ्यां नमः श्रोत्रयोः ॥ ॐ वसिष्ठ कश्यपाभ्यां नमः नासापुटयोः ॥ ॐ अत्रये नमः वाचि ॥ ॐ गायत्र्यग्निभ्यां नमः शिरसि ॥ ॐ उष्णिक् सवितृभ्यां नमः ग्रीवायाम् ॐ बृहतीबृहस्पतिभ्यां नमः अनूके । अनूकः पृष्ठवंशः ॥ ॐ बृहद्रथंतरे द्यावापृथिवीभ्यां नमः इति मंत्रावृत्त्या बाह्वोः ॥ ॐ त्रिष्टुबिंद्राभ्यां नमः नाभौ ॥ ॐ जगत्यादित्याभ्यां नमः श्रोण्योः ॥ ॐ अतिच्छंदा प्रजा

पतिभ्यां नमः लिंगे ॥ ॐ यज्ञा यज्ञियं वैश्वानराभ्यां नमः गुदे ॥ ॐ अनुष्टुप्पविश्वेभ्यो देवेभ्योनम इति मंत्रावृत्त्या ऊर्वोः ॥ ॐ पंक्तिमरुद्भ्यो नमः जान्वोः ॥ ॐ द्विपदा विष्णुभ्यां नमः पादयोः ॥ ॐ विच्छंदावायुभ्यांनमः नासापुटस्थप्राणेषु ॥ ॐ न्यूनाक्षराछंदोभ्यो नमः सर्वांगेषु ॥ एवमेवांगानि योजयित्वा ॥ वेदमयः संपद्यते ॥ शापानुग्रहसमर्थो भवति ॥ ब्राह्मं तेजश्च वर्द्धते ॥ न कुतश्चिद्भयं विंदते ॥ ऋङ्मयो यजुर्मयः साममयस्तेजोमयो ब्रह्ममयोऽमृतमयः संभूय ब्रह्मैवाभ्येति ॥ एवं सर्वानुक्रमोक्तन्यासं कृत्वा दक्षिण हस्ते पवित्रांतरं गृहीत्वा दक्षिणजानुनि वामहस्तोपरि दक्षिणहस्तं सपवित्रदर्भं निधाय ऋष्यादि स्मरेत् ॥ ॐकारस्य इत्यादि० ॥ इषेत्वादिखंब्रह्मांतकस्य माध्यंदिनीयस्य यजुर्वेदाम्नायस्य विवस्वान् ऋषिः गायत्र्यादीनि सर्वाणि यजूंषि सर्वाणि सामानि प्रतिलिंगोक्ता देवता ब्रह्मयज्ञारंभे विनियोगः ॥ ॐभूर्भुवः स्वः तत्सवि० ॥ ॐ इषेत्वेत्यादिवेदमारभ्यानुवाकशोऽध्यायशो यजुषो वा संहितां ब्राह्मणं चाध्यायशो ब्राह्मणांशो वा प्रणवावसानं वायथाशक्ति प्रत्यहमधीयमानो मंत्रं ब्राह्मणं च समाप्य पुनरेवमेवारभ्य समापयेत् ॥ अनध्यायेऽल्पं पर्वण्यल्पतरं पठेत् ॥ स्वशाखाध्ययनानंतरम् ॥ ॐ अग्निमीळे पुरोहितं यज्ञस्यं देवमृत्विजम्॥ होतारं रत्नधातममित्यादि ॥ ततः ॐ अग्न आयाहिवीत

ये गृणानोहव्यदातये ॥ निहोतासत्सि बर्हिषः ॥ इत्यादि॥ ततः ॐ शन्नोदेवी० ॥ चतुर्वेदानंतरं अंगानि पठेत् ॥ अथ शिक्षां प्रवक्ष्यामि॥अथातोऽधिकारः फलयुक्तानि कर्माणि मंडलं दक्षिणमक्षिहृदयम् ॥ वृद्धिरादैच् ॥ समाम्नायः समाम्नातः ॥ मयरसतजभनलगसंमितम् ॥ पंचसंवत्सरमयम् ॥ युग्माऽध्यक्षं ॥ गौः ग्माः॥अथातो धर्मजिज्ञासा॥अथातो ब्रह्मजिज्ञासा ॥ प्रणवमुच्चार्य तथा वेदेषु उपनिषद्रुपाध्यात्मिकीं विद्यामिति दासादिषु गीतां पृथगपि पठेत् ॥ ततः ॐ नमो ब्रह्मणे नमोऽस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः ॥ नमो वाचेनमोवाचस्पतयेनमो विष्णवेमहतेकरोमीति पठेत् ॥ ॐ तच्छंयोरावृणीमहे गातुं०द्विपदे शं चतुष्पदे ॥ योगीश्वरं याज्ञवल्क्यं ॥ नारायणं नमस्कृत्य॥इति विद्यात पोयोनिरयोनिर्विष्णुरीडितः ॥ वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ॥ ॐ ब्रह्मणे नम इत्युच्चार्य ॥ ततः ब्रह्मयज्ञीय कुशानुत्तरतः प्रक्षिप्याचामेत् ॥ अनेन यथाशक्तिब्रह्मयज्ञाख्येन कर्मणा यज्ञरूपी परमेश्वरः प्रीयतां न मम ॥ यस्य स्मृत्या० ॥ द्वितीयदिने पूर्वपठितभागं त्यक्त्वा अन्यमन्यं भागं पठेत् ॥ अंते पुनः प्रणवादि करोमीत्यंतं पठेत् यस्त्व नधीतसंपूर्णवेदः स यत्किंचिद्वेदभागं पुरुषसूक्तादिरूप माध्यात्मिकीं विद्यामितिहासंपुराणादिकं गायत्रीं वा जपेत् ॥ ब्रह्मोत्तरखंडे ॥ अथातो-ब्रह्मगायत्रीं यथाशक्ति जपेद्विजः ॥

ब्रह्मलोकमवाप्नोति ब्रह्मयज्ञफलं लभेत् ॥ ब्रह्मयज्ञप्रसिध्य-र्थं गायत्र्येकां जपेत्ततः ॥ तेन प्रीतिं परां याति देवदेवो जनार्दनः ॥ अथ ब्रह्म गायत्री ॥ ॐ सत्याय विद्महे हिरण्य गर्भाय धीमहि ॥ तन्नो ब्रह्म प्रचोदयादिति ॥ ॐकार व्याहृतीस्तिस्रः सावित्रीं त्रिपदां जपेत् ॥ जप्त्वा पुनाति पु-रुषमपि भ्रूणहनं नृपं ॥ मनुः ॥ अपां समीपे नियतो नैत्य-कं विधिमास्थितः ॥ सावित्रीमप्यधीयीत गत्वारण्यं समा श्रितः ॥ अनध्यायेष्वल्पपाठमाहापस्तंबः ॥ अथ यदि वा-तो वायात्स्तनयेद्वा विद्युन्नृत्त्येव स्फूर्जेदेकामृचमेकं वा य जुरेकं वा सामाभिव्याहरेदिति ॥ वातादिकममावास्याद्य-नध्यायमंत्रोपलक्षणमिति ॥ अमावास्यादिष्वनध्यायेष्वपि ब्रह्मयज्ञो भवत्येव ॥ अहरहः स्वाध्यायमधीते इति श्रुतेः ॥ मनुः ॥ आहैव स नखाग्रेभ्यः परमं तप्यते तपः ॥ यःस्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥ तथा॥ वेदोपाकरणे चैव जपेच्चैव तु नैत्यके ॥ नानुरोधोऽप्यनध्याये होममंत्रेषु चैव हि ॥ इति ब्रह्मयज्ञः ॥ ततः तर्पणे ब्रह्माणं पूर्वं विष्णुं रुद्रं प्रजापतिं देवान् छंदांसि वेदानृषीन्पुरा णाचार्यान् गंधर्वानितराचार्यान्संवत्सरं च सावयवं देवीरप्स-रसो देवानुगान्नागान्सागरान्पर्वतान्सरितो मनुष्यान्यक्षान्र क्षांसि पिशाचान्सुपर्णान्भूतानि पशून्वनस्पतीरोषधीर्भूतग्रा मश्चतुर्विधस्तृप्यतामित्योंकारपूर्वम् तर्पयेत्प्रीणयेत् ॥ ब्रह्माणं आदौ केषां विष्ण्वादीनामपुपूर्वशब्दोपादानम् ॥

योगी ॥ आवाह्य देवताः सर्वा विश्वेदेवाः सपैतृकाः ॥ ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम् ॥ इति ॥ सावयवमिति चकारात्संवत्सरस्यैव विशेषणम् ॥ चतुर्विध इति भूतग्रामस्य च ॥ ॐ कारपूर्वं प्रणवपूर्वकं तर्पयेदित्यर्थः ॥ तथाचोक्तम् ॥ ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म च ॥ अनोंकृत्य कृतं सर्वं न भवेत्सिद्धिकारकम् ॥ तर्पयेद्ब्रह्माणमित्यत्र तर्पणक्रियायाः कर्मभूतान् ब्रह्मादीनभिधाय भूतग्रामश्चतुर्विधस्तृप्यतामित्यत्र प्रथमाप्रयोगमुपदिशंत्याचार्याःॐ ब्रह्मा तृप्यतामिति तर्पणे प्रयोगः कार्यः ॥ गोभिलपरिशिष्टे ॥ तर्पणे प्रथमा प्रोक्ता श्राद्धे संबुद्धिरुच्यते ॥ पिता तर्पणकाले तु पितः स्याच्छ्राद्धकर्मणि ॥ अत्र विसर्जनोपदेशादावाहनमपि द्रष्टव्यम् ॥ योगी ॥ आवाह्य पूर्ववन्मंत्रैरास्तीर्य च कुशान्क्षितौ ॥ प्रागग्रेषु सुरान्सर्वान्दक्षिणाग्रेषु वा पितॄन् ॥ नामगोत्रे समुच्चार्य दद्यात्प्रणवपूर्वकम् ॥ नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ॥ नोपतिष्ठति तत्तोयं यत्र भूमौ प्रदीयते ॥ उभाभ्यामपि पाणिभ्यामुदकं यः प्रयच्छति ॥ स मूढो नरकं यातिकालसूत्रमवाक्शिराः ॥ इतिव्याप्रवचनं श्राद्धादिविषयम् तथा चोक्तम् ॥ तथा ॥ श्राद्धे दाने विवाहे च पाणिनैकेन दीयते ॥ तर्पणे तूभयेनैवं जलं देयं तु नान्यथा ॥ विष्णुः ॥ यत्राशुचि स्थलं चेत्स्यादुदके देवताः पितॄन् ॥ तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम् ॥ हारितः ॥ पात्राद्वा जलमादाय शुभे पात्रांतरे क्षिपे-

त् ॥ जलपात्रेऽथवा गर्ते न स्थले तु विबर्हिषि ॥ पिताम
हः ॥ हेमरौप्यमयं पात्रं ताम्रं कांस्यसमुद्भवम् ॥ पितॄणां
तर्पणे योग्यं मृन्मयं तु परित्यजेत् ॥ अपूर्वप्राप्तेषु नद्या-
दिख्याततीर्थेषु आवाहनाभावः ॥ तत्र तेषां नित्यसत्वात् ॥
तथा चोक्तम् ॥ गिरिषु ख्याततीर्थेषु नदीषु च विशेषतः ॥
साकांक्षा पितरो नित्यं तिष्ठंति सलिलार्थिनः ॥ स्कांदे ॥
स्वेरर्चा विधायेत्थं ततस्तर्पणमाचरेत् ॥ दर्भानगर्भानादाय
नव सप्ताथ पंच वा ॥ साग्रान्समूलानच्छिन्नान्द्विजो द-
क्षिणपाणिना ॥ तर्पणप्रकारो गोभिलः ॥ द्वौ हस्तौ युग्म
तः कृत्वा पूरयेदुदकांजलिम् ॥ गोशृंगमात्रमुद्धृत्य जलमध्ये
जलं क्षिपेत् ॥ दक्षः ॥ प्रादेशमात्रमुध्दृत्य सलिलं प्राङ्मुखः
सुरान् ॥ उदङ्मुखो मनुष्यांश्च पित्रादीन्दक्षिणामुखः ॥ तर्प-
येदिति शेषः ॥ भृगुश्च ॥ प्रागग्रैस्तर्पयेद्देवानुदगग्रैस्तु मानुषा-
न् ॥ तानेव द्विगुणीकृत्य तर्पयेत्प्रयतः पितॄन् ॥ ततो
निवीती मनुष्यान् ॥ ततो देवतर्पणानंतरं निवीती कंठाव-
लंबितसूत्रः सन् मनुष्यान् देवमानवान् तर्पयेदित्यनुषंगः ॥
भरद्वाजः ॥ कंठावलंबितं चैव ब्रह्मसूत्रं यदा भवेत् ॥ तन्नि-
वीतमिति ख्यातं शस्तं कर्मणि मानुषे ॥ योगी च ॥ मनु-
ष्याणामपाकुर्यात्तर्पणं कंठसज्जने ॥ प्राजापत्येन तीर्थेन
तर्पयेद्ब्रह्मणः सुतान् ॥ अत्र दिङ्नियमः ॥ ऐशान्यामथ कौ-
बेर्यां ब्रह्मपुत्रांश्च तर्पयेत् ॥ ब्रह्मवैवर्ते ॥ सौम्याशाभिमुखो
नित्यमुदगग्रे च बर्हिषि ॥ मनुष्याणां च तुष्ट्यर्थं निक्षिपे-

त्तुजलांजलीन् ॥ तानाह ॥ सनकं च सनंदं च तृतीयं च सनातनम् ॥ कपिलं चासुरिं चैव वोढुं पंचशिखं तथा ॥ एते ब्रह्मसुताः सप्त मानुषाः परिकीर्तिताः ॥ ततोऽपसव्यं तिलमिश्रं कव्यवाडनलश्सोमं यममर्यमणमग्निष्वात्तान्सोमपो बर्हिषदः ततो मनुष्यतर्पणानंतरं अपसव्यं प्राचीनावीतिं कृत्वा तिलैर्युक्तजलं गृहीत्वा कव्यवाडनलादींस्तर्पयेदिति संबंधः ॥ तथा कात्यायनः ॥ सव्यं जानु ततो न्वाच्य पाणिभ्यां दक्षिणामुखः ॥ स्वलिंगैस्तर्पयेन्मंत्रैः सर्वान्पितृगणांस्तथा ॥ शुक्लैश्च तर्पयेद्देवान्मनुष्यान्प्रबलैस्तिलैः ॥ पितॄन्कृष्णतिलैर्भक्त्या विधिवत्सर्वदा द्विजः ॥ उत्क्षिप्ते वामबाहौ तु दक्षिणस्कंधमाश्रितं ॥ प्राचीनावीतिमित्याहुस्तत्पित्र्ये ष्वेव कर्मसु॥ पैठीनसिः ॥ अपसव्यं ततः कृत्वा स्थित्वा च पितृदिङ्मुखः ॥ पितृदैव्यानि सर्वाणि पितृतीर्थेन तर्पयेत् ॥ मरीचिः ॥ विवाहे चोपनयने चौले सति यथाक्रमम् ॥ व्याघ्रपादः ॥ भानुभौमे त्रयोदश्यां नंदाभृगुमघासु च ॥ पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥ तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके ॥ निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम्॥मरीचिः॥ कठाः कण्वाश्च जाबाला ये च वाजसनेयिनः ॥ सतिलं तर्पणं कुर्युर्निषिद्धेपि दिने सदा॥शातातपः॥खड्गमौक्तिकहस्तेन कर्तव्यं पितृतर्पणम् ॥ मणिकांचनहस्तेन न शून्येन कदाचन ॥ मुक्तहस्तेन दातव्यं न मुद्रां तत्र दर्शयेत् ॥ तर्जन्यंगुष्ठयोगेन मुद्रेयमभिधीयते ॥

अनामिकाधृतं हेम तर्जन्यां रूप्यमेव च ॥ कनिष्ठिकां धृतं खड्गं तेन पूतो भवेन्नरः ॥ शंखः ॥ विना रौप्यसुवर्णेन विना ताम्रतिलैस्तथा ॥ विना दर्भैश्च मंत्रैश्च पितॄणां नोपतिष्ठते ॥ यमांश्चैके ॥ एके आचार्याः यमांस्तर्पयेदित्याहुः ॥ एकेग्रहणाद्विकल्पः ॥ तानाह ॥ यमाय धर्मराजाय मृत्यवे चांतकाय च ॥ वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ औदुंबराय दध्नाय नीलाय परमेष्ठिने ॥ वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥ इति श्लोकपठिताश्चतुर्दशयमाः ॥ तर्पणे नमस्कारः ॥ सर्वत्र योज्यः ॥ पाद्मे विशेषः ॥ पितृत्वादपसव्येन दक्षिणाभिमुखस्तिलैः ॥ देवत्वाद्देवतीर्थेन यमान्सं तर्पयेद्बुधैः ॥ पितृतर्पणंजलिसंख्यामानुषंगिकफलं चाह ॥ एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन्दद्याज्जलांजलीन् ॥ यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥ अंजलिसंख्यायां व्यासः ॥ एकैकमंजलिं देवा द्वौद्वौ तु सनकादयः ॥ अर्हंति पितरस्त्रींस्त्रीन्स्त्रियस्त्वेकैकमंजलिम् ॥ वृद्धशातातपस्तु ॥ मातृमुख्यास्तु यास्तिस्रस्तासां दद्याज्जलांजलीन् ॥ त्रींस्त्रीनेव तथा न्यासान् दद्यादेकैकमंजलिम् ॥ दैवे मानुषे च तर्पणे ब्रह्मांडे विशेषः ॥ अंजलिद्वितयं दद्याद्देवानां तर्पणे द्विजः ॥ ऋषीणां तर्पणेचैव सकृदेव प्रदापयेत् ॥ अतश्च पारस्करसूत्रानुसारिणां दैवे मानुषे च तर्पणे संख्या विशेषानभिधानाद्विकल्पः ॥ जीवत्पितृकोऽप्येतानन्यांश्चेतरः ॥ जीवन् विद्यमानः पिता यस्यासौ जीवत्पितृकः सोऽपि एतान्

पूर्वोक्तान् ब्रह्मादिचित्रगुप्तांतान् स्वस्त्यर्थे ॥ इतरः जीवत्पितृकादन्यो मृतपितृकः अन्येभ्योऽपरान् पित्रादीन् तर्पयेदिति पूर्वेण संबंधः ॥ विष्णुः ॥ अपसव्यं द्विजेद्राणां पित्र्ये सर्वत्र कीर्तितम् ॥ आप्रकोष्ठात्तु कर्तव्यं मातापित्रोस्तु जीवयोः ॥ न जीवत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत् ॥ अतिलमेवेति कौंडिन्यः ॥ योगी ॥ यदि स्याज्जीवत्पितृक एभ्यो दद्याज्जलांजलिम् ॥ येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥ पराशरस्तु ॥ वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते तथा ॥ येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥ शंखः ॥ एवं यः सर्वभूतानि तर्पयेदन्वहं द्विजः ॥ स गच्छेत्परमं स्थानं तेजोमूर्तिर्निरामयम् ॥ उदीरतामंगिरस आयं तु न ऊर्जं वहंतीः पितृभ्यो ये चेह मधु वाता इति त्र्यृचं जपन् ॥ प्रसिंचेत्तृप्यध्वमिति क्रमेण नवर्चां जपन् उपांशु आम्नायस्वरेण पठन् प्रसिंचेत् ॥ अंजलिकृतं जलं पितृतीर्थेन तर्पणजलाधिकरणे प्रक्षिपेत् ॥ तृप्यध्वमित्युक्त्वा प्रतिपुरुषं त्रींस्त्रीन् जलांजलींश्च प्रक्षिपेदित्यर्थः ॥ तथाच योगी ॥ पितॄन्ध्यायन्प्रसिंचेत जपन्मंत्रान्यथाक्रमम् ॥ तृप्यध्वमिति च त्रींस्त्रीन्पुरुषान्प्रति तर्पयेत् ॥ मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारया ॥ कुर्याच्चेद्वारिधाराभिस्तत्सर्वं निष्फलं भवेत् ॥ इति वचनादत्र केचिदुदीरतामित्यादिनवानामृचां पित्रादितर्पणेंजलिदाने करणत्वं मन्यंते ॥ तदसत् ॥ सूत्रार्थपर्या-

मुपगच्छंति तृषार्ताः सलिलार्थिनः ॥ निराशास्ते निवर्तंते वस्त्रनिष्पीडने कृते ॥ तस्मान्न पीडयेद्वस्त्रमकृत्वा पितृतर्पणम् ॥ त्रिगुणीकृतवस्त्रं तु न पीड्यं तु विचक्षणैः ॥ प्रातर्विशेषमाह ॥ निष्पीड्य वस्त्रमाचम्य ततः संध्यामुपासते ॥ मध्याह्ने तर्पणात्पूर्वं वस्त्रनिष्पीडनं भवेत् ॥ इति ॥

## अथ जलदेवतार्चनमाह ।

ब्राह्म्यवैष्णवरौद्रसावित्रमैत्रवारूणैस्तल्लिंगैर्मंत्रैरर्चयेत् ॥ ब्रह्मणोऽयं ब्राह्म्यः एवं सर्वत्र ॥ तैः कीदृशैः तल्लिंगैः तेषब्रह्मादीनां लिंगं प्रकाशनसामर्थ्यं येषां ते तल्लिंगास्तैः तान्नेवार्चयेत् ॥ नत्वत्र तद्धितेन तल्लिंगत्वे प्राप्ते न तल्लिंगैरित्युक्तिर्वृथा सत्यां श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्याभिर्मंत्राद्यंगविनियोगो भवति सर्वत्र ॥ अत्र तु लिंगमेव विनियोजकं ततः एषां मंत्राणां तत्प्रकाशनसामर्थ्यं त एवात्र ग्राह्याः ॥ इत्यर्थं तल्लिंगैरित्युक्तम् ॥ एकैकेन तल्लिंगेन मंत्रेण पृथक्पृथक् षोडशोपचारैः पंचोपचारैर्वा ब्रह्मादीन्पूजयेदित्यर्थः ॥ योगी ॥ ब्राह्म्यवैष्णवरौद्रैस्तु सावित्रमैत्रवारूणैः ॥ तल्लिंगैरेव मंत्रैस्तानर्चयेत्सुसमाहितः ॥ ध्यात्वा प्रणवमेवादौ देवानां तु यथाक्रमम् ॥ नमस्कारेण पुष्पाणि विन्यसेच्च पृथक्पृथक् ॥ अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥ स्मृत्यर्थसारे ॥ नैकपुष्पं द्विधा कुर्यान्न भिद्यात्कलिकामपि ॥ भेदश्च कलिकुंदानां समानो ब्रह्मह

त्यया ॥ अदृश्र ॰ह ॰स इत्यादित्यमुपस्थाय प्रदक्षिणीकृत्य दिशश्च देवताश्च नमस्कृत्योपविश्य ॥ अदृश्रमस्य केतवो॰ ह ॰ सः. शुचिपदित्येताभ्यां सूर्यमुपस्थाय स्तुत्वा प्रदक्षिणीकृत्य दिशः प्राच्यादयः देवताश्च संनिधानात्तासामेवाधिपतयः इंद्रादयः तानपि मंत्रांतरानवधानात् ॥ चतुर्थ्यंतैर्नाम मंत्रैरेव नमस्कृत्य तत उपविशेत् ॥ योगीशः ॥ ततोऽवलोकयेदर्कं हंसः शुचिपदित्यृचा॥ स याति ब्रह्मणः सद्म सदा ब्रह्म विचिंतयन् ॥ स्मृतिरत्नावल्याम्॥स्वयंभूरित्युपस्थाय सूर्यस्यैव प्रदक्षिणम्॥आवृत्य च नमस्कुर्याद्दिशो दिग्देवता अपि॥ब्रह्माग्निपृथिव्योषधिवाग्वाचस्पतिविष्णुमहद्भ्योऽद्भ्योपांपतये वरुणायनम इति ॥ पाठक्रमेण ब्रह्मादिभ्यःजलदानपूर्वकं नमेदित्यर्थः॥याज्ञवल्क्यः॥एतेभ्यो देवताभ्यश्च नमस्कारेणवै जलं ॥ दत्त्वा नमस्येत्क्रमशस्त्वंते वै सर्वकर्मणाम् ॥ ततः किं कुर्यादित्याह ॥ संवर्चसेति मुखं विमृष्टे देवा गातु विद इति विसर्जयेत् ॥ संवर्चसेति मंत्रेणांजलिना जलमादाय मुखं विमृष्टे देवा शोधयति ॥ देवागातुविदेति मंत्रेण कर्मांगभूतान् देवान् संहारमुद्रया विसर्जयेत् स्वस्थानं गमयेत् ॥ तथाच स्मृतिः॥संवर्चसेति पाणिभ्यां तोयेन क्षालयेन्मुखम् ॥ अथ संहारमुद्रा ॥ अधोमुख वामहस्ते उत्तानं दक्षिणहस्तकम् ॥ क्षिप्त्वांगुलीरंगुलिभिः संयोज्य परिवर्तयेत् ॥ एषा संहारमुद्रा स्याद्विसर्जनविधौ मता ॥ अथ तर्पणे चोक्तम् ॥ स्कंदपुराणे

पूर्वमोदग्रमोदादींस्तर्पयेत्पङ्क्तिनायकान् ॥ ततो ब्रह्मादयो देवास्तर्पणीया महामते ॥ ततश्च सनकादीनां ॥ प्रयतस्तृप्तिमाचरेत् ॥ अग्निष्वात्तादिकानां तु पितॄणां च ह्यनुक्रमात् ॥ यमाय धर्मराजाय कुर्वन्संतर्पणं ततः ॥ पितॄणामथ मातॄणां ततो मातामहस्य च ॥ पत्निश्वशुरबंधूनां सुहृत्संबंधिनां ततः ॥ पितृतर्पणे विशेषमाह ॥ अपसव्यं ततः कृत्वा ततश्च पितृदिङ्मुखः ॥ पितॄन्दिव्यानदिव्यांश्च पितृतीर्थेन तर्पयेत् ॥ मातामह्यादिसर्वेषामेकैकं सजलांजलिम् ॥ दद्यात्तीर्थे विशेषेण धर्मं परममास्थितः ॥ सूत्रे अनुक्तमप्यावाहनं कार्यम् ॥ आवाह्य पूर्ववन्मंत्रैरास्तीर्य च कुशाञ्छुभान् ॥ प्रागग्रेषु सुरान्सम्यग्दक्षिणाग्रेषु वै पितॄन् ॥ इति योगियाज्ञवल्क्योक्तं देवतासन्निधानार्थमविरुद्धमेव गृह्यते ॥ प्रादेशमात्रमुद्धृत्य सजलं प्राङ्मुखः सुरान् ॥ उदङ्मनुष्यांस्तर्पयेत्पितॄन्दक्षिणतस्तथा ॥ प्रादेशमात्रमुद्धृत्यांजलिप्रक्षेपः ॥ देवान्ब्रह्मऋषींश्चैव तर्पयेदक्षिणतोदकैः ॥ कौमादेव ब्रह्मार्पितर्पणं ॥ यवैः शुक्लस्तु तर्पयेद्देवान् ॥ इति गोभिलोक्तेः ॥ शुक्लतिलैर्वा ॥ हेमाद्रौ छागलेयः ॥ लघुपात्रं करे धृत्वा सौवर्णं खड्गमेव वा ॥ राजतं ताम्रजं वापि तेन संतर्पयेत्पितॄन् ॥ शंखोक्तेः॥सौवर्णेन पात्रेण राजतेनौदुंबरेण शंखखड्गपात्रेण शंकुना वाप्युदकं पितृतीर्थं स्पृशन्दद्यात् ॥ शंकुना सुवर्णादिनिर्मितया शलाकया ॥ इति तर्पणविधिः ॥

# अथ तर्पणप्रयोगः।

स्वासने उपविश्य दर्भपवित्रसुवर्णपाणिराचम्य प्राणायामत्रयं कृत्वा देशकालौ संकीर्त्य ॥ श्रीपरमेश्वरप्रीत्यर्थं देवर्षिमनुष्यपितृतर्पणमहं करिष्ये ॥ स्वासनोपरि प्रागग्रान्दक्षिणाग्रान्कुशानास्तीर्य यज्ञोपवीती प्राङ्मुखः देवानावाहयेत्तर्पयेच्च ॥ आवाहनपूर्वकं तर्पणमत्स्वेव कुर्यात् ॥ तद्यथा विश्वेदेवास आगतेति प्रजापतिर्ऋषिः गायत्री छंदः विश्वेदेवा देवताः आवाहने विनियोगः ॥ ॐ विश्वेदेवास० ॥

विश्वेदेवाः शृणुतेम इत्यस्य स्वयंभूर्ब्रह्मा ऋषिः त्रिष्टुप्छंदः विश्वेदेवा देवताः जपे विनियोगः ॥ ॐ विश्वेदेवाः शृणुतम २० ॥ २ ॥ ततः नव सप्त पंच त्रीन्वा समूलानच्छिन्नाग्रान्दर्भान्दक्षिणपाणिनादाय सशुक्लतिलोदकेन वांजलिं देवतीर्थेन पूरयित्वा जलाद्गोशृंगमात्रमुद्धृत्य देवतीर्थेनैव प्रागग्रैर्दर्भैर्जलमध्ये जलं क्षिपेत् ॥ ॐ मोदस्तृप्यताम् ॥ ॐ प्रमोदस्तृप्यताम् ॥ ॐ सुमुखस्तृप्यताम् ॥ ॐ दुर्मुखस्तृप्यताम् ॥ ॐ अविघ्नस्तृप्यताम् ॥ ॐ विघ्नकर्ता तृप्यताम् ॥ ६ ॥ ततो देवानामेकैकांजलिना तर्पणम् ॥ तत्र मंत्रः ॥ ॐ ब्रह्मा तृप्यताम् ॥ ॐ विष्णुस्तृप्यताम् ॥ ॐ रुद्रस्तृप्यताम् ॥ उदकोपस्पर्शः ॥ ॐ प्रजापतिस्तृप्यताम् ॥ ॐ देवास्तृप्यंताम् ॥ ॐ छंदांसि तृप्यंताम् ॥ ॐ वेदास्तृप्यंताम् ॐ ऋषयस्तृप्यंताम् ॥ ॐ

पुराणाचार्यास्तृप्यंताम् ॥ ॐ गंधर्वास्तृप्यंताम् ॥ ॐ इतराचार्यास्तृप्यंताम् ॥ ॐ संवत्सरः सावयवस्तृप्यताम् ॥ ॐ देव्यस्तृप्यंताम् ॥ ॐ अप्सरसस्तृप्यंताम् ॥ ॐ देवानुगास्तृप्यंताम् ॥ ॐ नागास्तृप्यंताम् ॐ सागरास्तृप्यंताम् ॐ पर्वतास्तृप्यंताम् ॥ ॐ सरितस्तृप्यंताम् ॥ ॐ मनुष्यास्तृप्यंताम् ॥ ॐ यक्षास्तृप्यंताम् ॥ ॐ रक्षांसि तृप्यंताम् ॥ उदकोपस्पर्शः ॥ ॐ पिशाचास्तृप्यंताम् ॥ उदकोपस्पर्शः ॥ ॐ सुपर्णास्तृप्यंताम् ॥ ॐ भूतानि तृप्यंताम् ॥ ॐ पशवस्तृप्यंताम् ॥ ॐ वनस्पतयस्तृप्यंताम् ॥ ॐ औषधयस्तृप्यंताम् ॥ ॐ भूतग्रामचतुर्विधस्तृप्यताम् ॥ ततो निवीत्युदङ्मुख ईशानाभिमुखो वा ऊर्ध्वजानुरुदगग्रैः कुशैः प्राजापत्येन तीर्थेन द्वाभ्यामञ्जलिभ्यां सनकादिमनुष्यांस्तर्पयेत् ॥ अथ वामपाणितले मूलानि अग्राणि तु दक्षिणहस्ते कृत्वा कुशमध्यप्रदेशे मनुष्यांस्तर्पयामीति प्राजापत्येनैवांजलिपूरणं तेनैव प्रक्षिपेच्च. ॥ यवैर्वातिलैर्मनुष्यतर्पणम् ॥ प्रतिदैवतं मंत्रावृत्त्या द्वौद्वौ जलांजली दद्यात् ॥ तद्यथा ॥ ॐ सनकस्तृप्यताम् ॥ ॐ सनंदनस्तृप्यताम् ॥ ॐ सनातनस्तृप्यताम् ॥ ॐ कपिलस्तृप्यताम् ॥ ॐ आसुरिस्तृप्यताम् ॥ ॐ वोढुस्तृप्यताम् ॥ ॐ पंचशिखस्तृप्यताम् ॥ ७ ॥ अत्र प्रत्यंजलिमंत्र आवर्तनीयः ॥ द्रव्यभेदात् ॥ अनुकृतस्य स्याग्गधोगात् ॥ कालभेदाच्च ॥ एकैकस्यैव समयोगस्येंद्रवाय्वादि ग्रहाभ्यास-

वत्प्रत्यंजलिमभ्यसनीयः ॥ एवं पितृतर्पणेऽपि ॥ ततोप-सव्यं कृत्वा दक्षिणाभिमुखः सव्यं जान्वाच्य उशंतस्त्वा आयंतु न इति द्वाभ्यां मंत्राभ्यां पितॄनावाहयेत् ॥ उशंत-स्त्वेति मंत्रस्य प्रजापत्यश्विसरस्वत्य ऋषयः गायत्रीछंदः पितरो देवताः आवाहने विनियोगः ॥ ॐ उशंतस्त्वाऽनि-धी० अत्तवे ॥ उदकोपस्पर्शः ॥ आयंतु न इति शंख ऋषिः त्रिष्टुप्छंदः पितरो देवता आवाहने विनियोगः ॥ ॐ आयं-तुनः पितर० स्मान् ॥ ततस्तानेव कुशान् द्विगुणान्कृत्वा तेषां मध्यं वामांगुष्ठतर्जन्यंतरे धृत्वा वामपाणिमणिबंधे धृता न्कृष्णतिलान्सव्यांगुष्ठेन तर्जन्या वामहस्तजले कृत्वा पितृ-तीर्थेनांजलिं पूरयित्वा प्रतिदैवतं मंत्रावृत्त्या त्रींस्त्रीनंजलीन्द-द्यात् ॥ तद्यथा ॥ ॐ कव्यवाडनलस्तृप्यतां एवं त्रिवारं सर्व त्र ॥ ॐ सोमस्तृप्यताम् ॥ ॐ यमस्तृप्यताम् ॥ ॐअर्यम-णस्तृप्यंताम् ॥ ॐ अग्निष्वात्ताः पितरस्तृप्यंताम् ॥ ॐ सो मपाः पितरस्तृप्यंताम् ॥ ॐ बर्हिषदः पितरस्तृप्यंताम्॥६॥ इति दिव्यपितृतर्पणम् ॥ इच्छया यमतर्पणं ॥ यमाय नमः ॥ प्रयोगेनैकैकस्मैअंजलित्रयं दद्यात् ॥ ॐ यमाय नमः ॥ ॐ धर्मराजाय नमः ॥ ॐ मृत्यवे नमः ॥ ॐ अंतकाय नमः ॥ ॐ वैवस्वताय नमः ॥ ॐ कालाय नमः ॥ ॐ सर्वभूतक्षया-य नमः ॐ औदुंबराय नमः ॥ ॐ दध्नाय नमः ॥ ॐ नीला-य नमः ॥ ॐ परमेष्ठिने नमः ॥ ॐ वृकोदराय नमः ॥ ॥ ॐ चित्राय नमः ॥ ॐ चित्रगुप्ताय नमः ॥ १४ ॥ जीव-

त्पितृकोऽप्येतावत्तर्पणं कुर्यात् ॥ मृतपितृकश्चेत्तर्हि स्वपितृतर्पणं कुर्यात् ॥ तद्यथा ॥ अमुकगोत्रः अस्मत्पिता अमुकशर्मा वसुरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः ॥ एवं पुनरंजलिद्वयम् ॥ एवं प्रथमांतं सर्वत्र ज्ञेयम् ॥ अमुकगोत्रः अस्मत्पितामह अमुकशर्मा रुद्ररूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः ॥ एवं द्विः ॥ अमुकगोत्रः अस्मत्प्रपितामहः आदित्यरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः ॥ एवं द्विः॥ ततः उदीरताअंगिरसः आयंतु न इति त्रयाणां मंत्राणां शंख ऋषिः त्रिष्टुप्छंदः पितरो देवताः ऊर्जंवहंतीरित्यस्य प्रजापतिऋषिः गायत्री छंदः ॥ पितृभ्यो ये चेह इति द्वयोः प्रजापत्यश्विनीसरस्वत्य ऋषयः त्रिष्टुप्छंदः त्रयाणां पितरो देवताः ॥ मधुवाता इति तृचस्य गौतम ऋषिः गायत्री छंदः विश्वेदेवा देवताः सर्वेषां प्रसेकाख्ये कर्मणि विनियोगः ॥ॐ उदीरतामवरउत्परासऽउन्मध्यमाः पितरः सोम्यासः ॥ असुंयऽईयुरवृका ऋतज्ञास्ते नोऽवंतुपितरो हवेषु ॥ १ ॥ ॐ अंगिरसो नः पितरो नवग्वाऽअथर्वाणो भृगवः सोम्यासः ॥ तेषांवयꣳसुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ॥ २ ॥ ॐ आयंतु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधया मदंतोऽधिब्रुवंतु तेऽवं त्वस्मान् ॥ ३ ॥ ॐ ऊर्जंवहंतीरमृ०पितॄन् ॥ ४ ॥ ॐ पितृ

भ्यः स्वधायिभ्यः०शुंधध्वम् ॥५॥ॐ येचेहपितरो ०जुप- स्व ॥ ६ ॥ ॐ मधुवाता० ॥ ७ ॥ ॐ मधुनक्तोमुतो०॥८॥ ॐ मधुमान्नोव० ॥ ९ ॥ उदीरतामिति क्रमेण नवर्चो जपन् उपांशु आम्नायस्वरेण पठन् प्रसिंचेदंजलिकृतं जलं पितृती- र्थेन धारां प्रक्षिपेत् ॥ ततः तृप्यध्वमिति त्रिः ॥ इति प्रसेका- ख्यं कर्मान्तरम् ॥ ततः अमुकगोत्रा अस्मन्माता अमुकदा- वसुरूपा तृप्यतां इदं जलं तस्यै स्वधा नमः ॥ एवं द्विः ॥ अमुकगोत्रा अस्मत्पितामही अमुकदा रुद्ररूपा तृप्यतामिदं जलं तस्यै स्वधा नमः ॥ एवं द्विः ॥ अमुकगोत्रा अस्मत्प्र- पितामही अमुकदा आदित्यरूपा तृप्यतामिदं जलं तस्यै स्वधा नमः ॥ एवं द्विः ॥ मातापितामही चैव तथैव प्रपिता मही ॥ एतासां पितृवद्द्याच्छेपास्वेकैकमंजलिम् ॥ ततः अमुकगोत्रा अस्मत्सापत्नमाता अमुकीदा तृप्यतामिदं ज- लं तस्यै स्वधा नमः॥ ततो नमो वः इति यजुः परमेष्ठी प्र- जापतिर्ऋषिः० यजुश्छंदः पितरो देवता जपे विनियोगः॥ ॐ नमोव ऽ पितरोरसाय०पितरोनमोवः पितरो गृहान्नः इति जपः ॥ ॐ गृहान्नः० पितरोदत्त सतो वः० पितरो देष्म ॥ अमुकगोत्रः अस्मन्मातामहः अमुकशर्मा वसुरूपस्तृप्यतां इदं जलं तस्मै स्वधा नम० ॥ एवं प्रमातामहवृद्धप्रमातामहयोः ततो मातामह्यादीनां तिसृणामेकैकमंजलिं दद्यात् ॥ पितृ- व्यादिगुर्वंतांस्तर्पयेत् ॥ एवं तर्पणं कृत्वा ॥ आब्रह्मस्तंबपर्य-

तं देवर्षिपितृमानवाः ॥ तृप्यंतु पितरः सर्वे मातृमातामहादयः ॥ १ ॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ॥ आब्रह्मभुवनाल्लोकानिदमस्तु तिलोदकमिति मंत्राभ्यां अंजलिद्वितयं दद्यात् ॥ येबांधवाऽ बांधवा वायेऽन्यजन्मनि बांधवाः ॥ ते तृप्तिमखिलां यांतु यश्चास्मत्तोभिवांछति ॥ इति मंत्रेण भुवि एकमंजलिं प्रक्षिप्य ॥ ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ॥ ते गृह्णंतु मया दत्तं वस्त्रनिष्पीडनोदकमिति मंत्रेण स्नानवस्त्रं निष्पीडयेत् ॥ वस्त्रनिष्पीडननिषेधमाह पराशरः ॥ द्वादश्यां पंचदश्यां वा संक्रमे श्राद्धवासरे ॥ वस्त्रं निष्पीडयेन्नैव न च क्षारेण योजयेत् ॥ इति निषेधस्तु मंत्रेण पीडने ॥ तस्माद्द्वादश्यादिषु तूष्णीं निष्पीडयेत् ॥ निराशाः पितरो यांति वस्त्रनिष्पीडने कृते ॥ तस्मान्निष्पीडयेद्वस्त्रं ना कृत्वा पितृतर्पणम् ॥ ततो यज्ञवीत्याचम्य ॥ पुनरपसव्यं कृत्वा द्विगुणितदर्भावृत्तरतः परित्यजेत्तत्र मंत्राः ॥ येषां न पिता न भ्राता न पुत्रो नान्यगोत्रिणः ॥ ते सर्वे तृप्तिमायांतु मयोत्सृष्टैः कुशैः सदा ॥ सव्यमाचम्य ॥ ततः जले ब्रह्मदेवतापूजनेविनियोगः ॥ ॐ ब्रह्म जज्ञानं प्रथमं० श्च व्विवः ॥ इत्यनेन ब्रह्माणं पंचोपचारैः संपूज्य ॥ इदं विष्णुर्मेधातिथिर्ऋषिः गायत्री छंदः विष्णुर्देवता विष्णुपूजने विनियोगः॥ ॐ इदं व्विष्णुर्व्विच०सुरे ॥ इत्यनेन विष्णुं पूजयेत् ॥ नमस्ते रुद्र

मन्यव इति परमेष्ठीऋषिः गायत्री छंदः रुद्रोदेवता रुद्रपूज जने विनियोगः ॥ ॐ नमस्ते रुद्र मन्यवऽउतो०नमः ॥

इति रुद्रं पूजयेत् ॥ उदकोपस्पर्शः ॥ तत्सवितुरिति विश्वामित्र ऋषिः गायत्री छंदः सूर्यो देवता सूर्यपूजने विनियोगः॥ ॐ तत्सवितुर्व० ॥ इति सूर्यपूजनम् ॥ मित्रस्य चर्षणिधृतेति विश्वामित्र ऋषिः गायत्री छंदः मित्रो देवता पूजने विनियोगः ॥ ॐ मित्रस्य चर्षणिधृतोवोदेवस्य सानसि ॥ द्युम्नं चित्रश्रवस्तमम् ॥ इति मित्रं पूजयेत् ॥ इमम्मेति शुनःशेप ऋषिः गायत्री छंदः वरुणो देवता पू० ॥ ॐ इमम्मेवरुण श्रु०॥इति वरुणपूजनम्॥तत उत्थाय॥अदृश्रमस्येति प्रस्कण्वो गायत्री सूर्योपस्थाने वि०।ॐ अदृश्रमस्य केतवो विरश्मयोजना २ अनु ॥ भ्राजन्तो अग्नयो यथा ॥१॥हꣳसः शुचिपदिति वामदेव ऋषिः अतिजगती छंदः सूर्यो देवता सूर्योपस्थाने विनियोगः॥ ॐ हꣳसः शुचिपद्वसुरंतरिक्षꣳसद्धोता वेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ इति मंत्रद्वयेन सूर्यमुपस्थाय प्रदक्षिणमावृत्य ॥ ॐ प्राच्यै दिशे नमः ॥ ॐ इंद्राय नमः ॥ एवं दशदिग्देवताश्च नत्वोपविशेत् ॥ॐ ब्रह्मणे नमः ॥ ॐ अग्नये नमः ॐ पृथिव्यै नमः ॥ ॐ औषधीभ्यो नमः ॐ वाचे नमः ॥ ॐ वाचस्पतये नमः ॥ ॐ

नमः ॐ महद्भ्यो नमः॥ॐ अद्भ्यो नमः ॐ अपां पतये वरुणाय नमः ॥ इति क्रमेण ताभ्यो देवताभ्यो जलं दत्त्वा नमस्येत् ॥ ततः संवर्चसेति परमेष्ठी ऋषिः त्रिष्टुप्छंदः त्वष्टा देवता मुखमार्जने विनियोगः ॥ ॐ संवर्चसा पयसा संतनूभिरगन्महि मनसासꣳ शिवेन ॥ त्वष्टा सुदत्रो विदधातु रायोनुमार्ष्टु तन्वोयद्विलिष्टम् ॥ इति हस्ताभ्यां मुखमार्जनम् ॥ देवागातुविदइति विसर्जनम् ॥ अनेन देवऋषिमनुष्यपितृतर्पणाख्येन कर्मणा भगवान्परमेश्वरः प्रीयतां न मम ॐ तत्सद्ब्र० ॥ इति तर्पणप्रयोगः ॥

## अथ संक्षेपतर्पणम् ॥

तथा चोक्तम्॥ आब्रह्मस्तंबपर्यंतं जगत्तृप्यत्विति ब्रुवन् ॥ जलांजलित्रयं दद्यात् ॥ तथा चोक्तम् ॥ आब्रह्मस्तंबपर्यंतं जगत्स्थावरजंगमम् ॥ मया दत्तेन तोयेन तृप्तिं यांतु परां गतिम् ॥ इति संक्षेपतर्पणम् ॥ ततस्तीर्थं प्रक्षाल्य जलपात्रमादाय तीर्थप्रदेशं प्रदक्षिणीकृत्य गृहमागत्य विष्ण्वादिपूजनं कार्यम् ॥ नृसिंहपुराणे॥जलदेवं नमस्कृत्य ततो गच्छेद्गृहं बुधः ॥ पौरुषेण तु सूक्तेन ततो विष्णुं समर्चयेत् ॥ वैश्वदेवं ततः कुर्याद्बलिकर्म तथैव च ॥ अकाले कृतं प्रयोगपारिजाते ॥ अकाले यत्कृतं कर्म कालं प्राप्य पुनः क्रिया॥अकाले यत्कृतं कर्म अकृतं तद्विचक्षते ॥ अकर्म क्रियते होमादका

र्षिभिः ॥ पंच क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥ देवलः अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ॥ होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ तर्पणं श्राद्धं इति कात्यायनः॥ परिशिष्टे ॥ यस्मिन्नग्नौ भवेत्पाको वैश्वदेवस्तु तत्र वै ॥ उत्तानेन तु हस्तेन ह्यंगुष्ठाग्रेण पीडनम् ॥ संहितांगुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥ शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् ॥ संकल्पयेद्यदाहारस्तेनाग्नौ जुहुयाद्धविः ॥ व्यासः ॥ जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितम्॥ दध्यक्तं पयसाभ्यक्तं तदभावेऽम्भसापि वा ॥ कात्यायनः ॥ स्वाहाकारो वषट्कारो नमस्कारो दिवौकसाम् ॥ स्वधाकारः पितॄणां तु हंतकारो नृणां तथा ॥ चतुर्विंशतिमते ॥ आदौ वृद्धौ क्षये चांते दर्शे मध्ये महालये ॥ एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते ॥ मार्कंडेयः ॥ यः करोति नरो होममसमिद्धे विभावसौ ॥ जीर्णदुःखी च रोगार्तो मंदाग्निः संप्रजायते ॥ तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन ॥ आरोग्यमिच्छतायुष्यं श्रियमात्यंतिकीं तथा ॥ शातातपः॥गंधं पुष्पं च दत्त्वाथ वह्निरग्नेश्च धर्मवित् ॥ पाणिनैकेन जुहुयाद्धविः सत्यं निधाय च ॥ उद्धृत्य हविरासिच्य हविषेण घृतादिना ॥ स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत् ॥ अविभक्तेषु संस्पृष्टेष्वेकेनापि कृतं तु यत् ॥ देवयज्ञादिसर्वार्थं लौकिकाग्नौ कृतं यदि ॥

## अथ साग्निकवैश्वदेवप्रयोगः॥

अह्नोऽष्टधा विभक्तस्य चतुर्थे स्नानमाचरेत् ॥ पंचमे पंचयज्ञाः स्युर्भोजनं च तदुत्तरम्॥तत्रावसथ्यादुल्मुकं महानसे कृत्वा तत्र वैश्वदेवार्थं पाकं विधाय महानसादगारानाहृत्यावसथ्ये निधाय ततः पाकादन्नमुद्धृत्याभिघार्य अग्नेरुत्तरतः प्राङ्मुख उपविश्य दर्भपवित्रपाणिर्द्विराचम्य प्राणानायम्य देशकालौ संकीर्त्य ॥ ममपुरुषसंस्कारान्नसंस्कारद्वारा श्रीपरमेश्वरप्रीत्यर्थं वैश्वदेवेनाहं यक्ष्ये॥ ततोदेवताभिध्यानम् ॥ देवतानामभिध्यानं न करोति विमूढधीः ॥ वृथा तस्य भवेत्कर्म इति वेदविदो विदुः ॥ तद्यथा ॥ ब्रह्माणं ॥ प्रजापतिं ॥ गृह्यं ॥ कश्यपं । अनुमतिं । एतादेवयज्ञेन ॥ पर्जन्यं ॥ आपः ॥ पृथिवीं । धातारं । विधातारंवायुं ॥ ४ ॥ प्राचींदिशं । दक्षिणां दिशं।प्रतीचींदिशं।उदीचीं दिशं ॥ ब्रह्माणं । अंतरिक्षं ॥ सूर्यं विश्वान्देवान् ॥ विश्वान्भूतान् ॥ उषसं । भूतानां च पतिं ॥ पितॄन् । बलियज्ञेन ॥ यक्ष्माणं ॥ वैश्वदेवान्नपात्रनिर्णेजनेन ॥ सनकादिमनुष्यान्हंतकारेण यक्ष्ये ॥ ततः मणिकोदकेनाग्निं पर्युक्ष्य नेतरथावृत्तिः ॥ दक्षिणजान्वाच्य दक्षिणहस्तेन द्वादशपर्वपूरकमोदनमादाय जुहुयात् ॥ प्रदीप्तेग्नौ जुहोति ॥ ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे नमम ॥ ॐ प्रजापतये स्वाहा इदं प्र० ॥ ॐ गृह्याभ्यः स्वाहा इदं गृह्याभ्यो० ॥ ॐ कश्यपाय स्वाहा इदं कश्यपा० ॥ ॐ अनुमतये स्वाहा इदं अनु०॥५॥ देवयज्ञः ॥ मणिकपश्चिमभागे

# अथ साग्निकवैश्वदेवप्रयोगः ॥

अह्नोऽष्टधा विभक्तस्य चतुर्थे स्नानमाचरेत् ॥ पंचमे पंचयज्ञाः स्युर्भोजनं च तदुत्तरम्॥तत्रावसथ्यादुल्मुकं महानसे कृत्वा तत्र वैश्वदेवार्थं पाकं विधाय महानसादगारानाहृत्यावसथ्ये निधाय ततः पाकादन्नमुद्धृत्याभिघार्य अग्नेरुत्तरतः प्राङ्मुख उपविश्य दर्भपवित्रपाणिर्द्विराचम्य प्राणानायम्य देशकालौ संकीर्त्य ॥ ममपुरुषसंस्कारान्नसंस्कारद्वारा श्रीपरमेश्वरप्रीत्यर्थं वैश्वदेवेनाहं यक्ष्ये ॥ ततोदेवताभिध्यानम् ॥ देवतानामभिध्यानं न करोति विमूढधीः ॥ वृथा तस्य भवेत्कर्म इति वेदविदो विदुः ॥ तद्यथा ॥ ब्रह्माणं ॥ प्रजापतिं ॥ गृह्यं ॥ कश्यपं । अनुमतिं । एतादेवयज्ञेन ॥ पर्जन्यं ॥ आपः ॥ पृथिवीं । धातारं । विधातारंवायुं ॥ ४ ॥ प्राचीदिशं । दक्षिणां दिशं।प्रतीचीदिशं।उदीची दिशं ॥ ब्रह्माणं । अंतरिक्षं ॥ सूर्यं विश्वान्देवान् ॥ विश्वान्भूतान् ॥ उषसं । भूतानां च पतिं ॥ पितॄन् । बलियज्ञेन ॥ यक्ष्माणं ॥ वैश्वदेवान्नपात्रनिर्णेजनेन ॥ सनकादिमनुष्यान्हंतकारेण यक्ष्ये ॥ ततः मणिकोदकेनाग्निं पर्युक्ष्य नेतरथावृत्तिः ॥ दक्षिणजान्वाच्य दक्षिणहस्तेन द्वादशपर्वपूरकमोदनमादाय जुहुयात् ॥ प्रदीप्तेऽग्नौ जुहोति ॥ ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे नमम ॥ ॐ प्रजापतये स्वाहा इदं प्र० ॥ ॐ गृह्याभ्यः स्वाहा इदं गृह्याभ्यो० ॥ ॐ कश्यपाय स्वाहा इदं कश्यपा० ॥ ॐ अनुमतये स्वाहा इदं अनु०॥५॥ देवयज्ञः ॥ मणिकपश्चिमभागे

प्राक्संस्थमुदकसंस्थं वा हुतशेषेणान्नेन वलित्रयं दद्यात् ॥ ॐ पर्जन्याय नमः इदं पर्जन्याय न मम ॥ ॐ अद्भ्यो नमः इदमद्भ्यो० ॥ ॐ पृथिव्यै नमः इदं पृथि० ततो द्वार्ययोः शाखयोर्मध्ये प्राक्संस्थं वलिद्वयं दद्यात् ॥ ॐ धात्रे नमः इदं धात्रे न मम ॥ ॐ विधात्रे नमः इदं विधात्रे० ॥ नमो वायवे नम इत्यनेनैव मंत्रेण पुरस्तादारभ्य प्रतिदिशं प्रदक्षिणं बलिचतुष्टयं दद्यात् ॥ इदं वायवे न मम सर्वत्र ॥ ततः प्रागादिचतसृषु दिक्षु दत्तानां वायुवलीनां पुरस्ताद्दिशां चतुरो वलीन्दद्यात् ॥ ॐ प्राच्यै दिशे नमः इदं प्राच्यै० ॥ ॐ दक्षिणायै दिशे नमः इदं दक्षिण० ॥ ॐ प्रतीच्यै दिशे नमः इदं प्रतीच्यै० ॥ ॐ उदीच्यै दिशे नमः इदं उदी० ॥ ततो वायुवलीनामंतराले प्राक्संस्थं वलित्रयं दद्यात् ॥ ॐ ब्रह्मणे नम इदं ब्रह्म० ॥ ॐ अंतरिक्षाय नमः इदं अंत० ॥ ॐ सूर्याय नमः इदं सू० ॥ एतेषामुत्तरतो वलिद्वयं दद्यात् ॥ ॐ विश्वेभ्यो देवेभ्यो नम इदं विश्वेभ्यो दे० ॥ ॐ विश्वेभ्यो भूतेभ्यो नमः इदं विश्वे० ॥ तयोश्चोत्तरतो वलिद्वयं दद्यात् ॥ ॐ उषसे नमः इदमुष० ॥ ॐ भूतानां पतये नमः इदं भू० इति भूतयज्ञः ॥ ब्रह्मादिवलीनां दक्षिणप्रदेशे प्राचीनावीती दक्षिणाभिमुखः सव्यं जान्वाच्य पितृतीर्थेन पितृभ्यः स्वधा नमः इति मंत्रेणैकवलिं पात्रावशिष्टान्नेन दद्यात् ॥ इदं पितृभ्यः स्वधा न मम ॥ इति पितृयज्ञः सव्यं कृत्वोदकस्पर्शः ॥ ततस्तत्पात्रं प्रक्षाल्य नि-

र्णेजनजलं ब्रह्मादिबलितो वायव्यां दिशि निनयेत् ॥ यक्ष्मैतत्ते निर्णेजनं इदं यक्ष्मणे ॥ अत्र ब्रह्मयज्ञो वा ॥ ब्रह्मयज्ञस्तु उक्त एव ॥ ततो वैश्वदेवान्नादुद्धृत्य षोडशग्रासपरिमितमन्नमुदकपूर्वकं ब्राह्मणाय दद्यात् ॥ पात्रे अन्नं कृत्वा निवीती भूत्वोदङ्मुख उपविष्टः ॥ इदमन्नं सनकादिमनुष्येभ्यो हंत ते इति मंत्रेण दद्यात् ॥ विष्णुपुराणे ॥ ततो गोदोहमात्रं तु तिष्ठेत्कालं गृहांगणे ॥ अतिथिग्रहणार्थाय तदूर्ध्वं वा यथेच्छया ॥ अतिथिप्राप्तौ पादप्रक्षालनपूर्वकं गंधमाल्यादिभिरभ्यर्च्यान्नं परिवेष्य हंत ते इति मंत्रेण संकल्प्य ॥ यथा ॥ हंत इदमन्नं सनकादिमनुष्येभ्यो न मम ॥ मनुः ॥ अतिथिं पूजयेद्यस्तु श्रांतं चादृष्टमागतम् ॥ सवृषं गोशतं तेन दत्तं स्यादिति मे मतिः ॥ ततः कुलदेवतापूजनम् ॥ ततो नित्यश्राद्धम् ॥ ततो ग्रासः ॥ तत्र ऋष्यशृंगः गवां ग्रासं प्रकुर्वीत नित्यमेव दिनेदिने ॥ गवां कंडूयने स्पर्शे वासमाह्निकमेव च ॥ तत्र मंत्रः ॥ सौरभेय्यः सर्वहिताः पवित्राः पापनाशनाः ॥ प्रतिगृह्णंत्विमं ग्रासं गावस्त्रैलोक्यमातरः ॥ इदमन्नं गोभ्यो न मम ॥ ततः काकादिबलीन्बहिर्दद्यात् ॥ तद्यथा ॥ ऐंद्रवारुणवायव्याः सौम्या वै नैर्ऋतास्तथा॥ वायसाः प्रतिगृह्णंतु भूमौ पिंडं मयार्पितम्॥ इदं वायसेभ्यो न मम ॥ श्वानौ द्वौ श्यामशबलौ वैवस्वत कुलोद्भवौ ॥ ताभ्यां पिंडं प्रदास्यामि रक्षेतां पथि मां सदा॥ इदं श्वभ्यां न मम ॥ देवा मनुष्याः पशवो वयांसि सिद्धा-

श्च यक्षोरगदैत्यसंघाः ॥ प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छंति मया प्रदत्तम् ॥ इदं देवादिभ्यो न मम ॥ पिपीलिकाकीटपतंगकाद्या बुभुक्षिताः कर्मणि वद्धवद्धाः ॥ तृप्त्यर्थमन्नं हि मया प्रदत्तं तेषामिदं ते मुदिता भवंतु ॥ इदं पिपीलिकादिभ्यो न मम ॥ ततः गृहमागत्य त्र्यायुषमिति मंत्रेण भस्मना त्रिपुंड्रधारणम् ॥ अनेन वैश्वदेवाख्येनकर्मणा परमेश्वरः प्रीयतां न मम ॥

## अथ निरग्निकस्य वैश्वदेवः ॥

वसिष्ठः ॥ अनग्निकस्तु यो विप्रः सोऽन्नं व्याहृतिभिः सह ॥ हुत्वा शाकलमंत्रैश्च शेषाद्भूतबलिं हरेत् ॥ अनग्निकः श्रौतस्मार्ताग्निरहितः शाकलमंत्राः देवकृतस्यैनसो देवयजनमसीत्याद्याः ॥ अत्रिः ॥ प्रजापतेः स्विष्टकृतः पत्नीनामाहुतीर्हुत्वा ॥ हुतशेषात्ततो देवो वली भाक्तिकपैष्टिकौ ॥ व्यासः ॥ शाकलेन विधानेन जुहुयाल्लौकिकानले ॥ व्यस्ताभिर्व्याहृतीभिस्तु समस्ताभिस्ततः परम् ॥ षड्भिर्देवकृतस्येति मंत्रविद्भिर्यथाक्रमम् ॥ प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाहुतीः ॥ ॐकारपूर्वस्वाहांते त्यागः स्विष्टकृद्विधानतः ॥ भुवि दर्भान्समास्तीर्य बलिकर्म समारभेत् ॥ विश्वेभ्यो देवेभ्यः इति सर्वेभ्यो भूतेभ्य एव च ॥ भूतानां पतये चेति नमस्कारेण शास्त्रवित् ॥ दद्याद्बलित्रयं चाग्रे पितृभ्यश्च स्वधानमः ॥ पात्रनिर्णेजनं वारि वायव्यां दिशि

निक्षिपेत् ॥ उद्धृत्य षोडशग्रासमात्रमन्नं घृतप्लुतम् ॥ इद-
मन्नं मनुष्येभ्यो हंतेत्युक्त्वा समुत्सृजेत् ॥ गोत्रनाम स्वधा-
कारे पितृभ्यश्चापिशक्तितः ॥ षड्भ्योऽन्नमन्वहं दद्यात्पितृय-
ज्ञविधानतः ॥ अभावादग्निहोत्रस्य आवसथ्यात्तु चाह्यतः ॥
यस्मिन्नग्नौ पचेदन्नं तस्मिन्होमो विधीयते ॥ यज्ञपार्श्वे का-
त्यायनः ॥ अनाहिताग्निभिः कार्यो वैश्वदेवो यथाविधि ॥
अभक्ष्यस्तु भवेत्पाको वैश्वदेवविवर्जितः ॥ सभार्यो यो
गृहीताग्निर्विधुरः स्नातकोऽपि वाः ॥ व्याहृतीभिः सम-
स्ताभिर्व्यस्ताभिश्च ततः परम् ॥ हुत्वा तु शाकलैर्मंत्रैः प्रा-
जापत्यं ततः परम्॥स्विष्टकृच्च हुनेदन्नं देवयज्ञोऽयमीरितः॥
भूतयज्ञं ततः कुर्यात्पर्जन्यादित्रिकं विना ॥ नित्यश्राद्धं
निरग्नेः स्यात्साग्नेः पित्र्योबलिस्मृतः॥पितृयज्ञो यमाख्यातो
नाग्नेर्वा पैत्रिको बलिः ॥ निर्णिज्य ब्रह्मयज्ञस्यापंचमो
मानुषः स्मृत इति ॥ अन्नप्रोक्षणे मंत्रानाह ॥ वायुपुराणे ॥
शंदेवा इति तृचं च इदमापस्तथैव च ॥ किरिकेभ्यः शंभ-
वाय षड्भिरन्नं विशुध्यति ॥ देवलः ॥ नात्मार्थं पाचये-
दन्नं नात्मार्थं घातयेत्पशून् ॥ देवार्थं ब्राह्मणार्थं वा पच्य-
माने न बाध्यते ॥ अथ निरग्निकवैश्वदेवप्रयोगः ॥ स्थंडि-
ले पंचभूसंस्कारान्कृत्वा तत्राग्निं संस्थाप्य वैश्वदेवार्थमन्नं
घृतयुतं कृत्वा गंधपुष्पाणि चादाय पश्चादग्नेः प्राङ्मुख उप-
विश्य हुतवहं समृद्धं विधाय दर्भपवित्रपाणिर्द्विराचम्य बद्ध
शिखी प्राणानायम्य संकीर्त्य शुभपुण्यतिथौ पंचसूनाजनित

पापक्षयपूर्वकनित्यकर्मानुष्ठानसिद्धिद्वारा श्रीपरमेश्वरप्रीतये वैश्वदेवाख्यं कर्माहं करिष्ये ॥ ततो देवताभिध्यानम् ॥ प्रजापतिं अग्निं वायुं सूर्यं षड्वारमग्निं प्रजापतिं अग्निं २ स्विष्टकृतं एतान्देवयज्ञेन ॥ धातारं विधातारं वायुंवायुंवायुंवायुं प्राचीदिशं दक्षिणादिशं प्रतीचीं दिशं उदीचीं दिशं ॥ ब्रह्माणं अंतरिक्षं सूर्यं विश्वान्देवान् विश्वान्भूतान् ॥ उपसं भूतानां पतिं ॥ पितॄन् बलियज्ञेन ॥ यक्ष्माणं वैश्वदेवान्नपात्रानिर्णेजनेन ॥ सनकादिमनुष्यान् हंतकारेणाहं यक्ष्ये ॥ चत्वारि शृंगेइत्याग्निं ध्यात्वा ॥ ॐचत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य ॥ त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां२ऽआविवेश ॥ १ ॥ एषो ह देवेत्यावाहनम् ॥ ॐएषो ह देवः प्रदिशो नुसर्वाः पूर्वो ह जातः स उ गर्भे अंतःस एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ॥ २ ॥ ॐ वैश्वानराय नमः इति मंत्रेण गंधपुष्पाद्यैर्वह्निमभ्यर्च्य प्रार्थयेत् ॥ मुखं यः सर्वदेवानां हव्यभुक्कव्यभुक्तथा ॥ पितॄणां च नमस्तस्मै विष्णवे पावकात्मने ॥ शांडिल्यगोत्र ॥ अरुणी माता ॥ वरुणपिता॥उत्तानकुक्षी जिह्वा ललाटकपिला करालीं श्वेता धूम्रा पैंग्या वैश्वानरा० ॥ततो वैश्वदेवार्थमुद्धृतमन्नंषड्भिर्मंत्रैः शुद्धयर्थंसंप्रोक्षयेत् ॥ ते च मंत्राः॥ॐ यद्देवादे ॥०॥१॥ ॐ दिवा० ॥ २ ॥ ॐ यदियाग्र० ॥ ३ ॥ इदमापः प्र० ॥४॥ ॐ किरिकेभ्यो० निर्हतेभ्यः ॥ ५ ॥ ॐनमः शंभवाय०

शिवतराय च ॥ ६ ॥ प्रदक्षिणमग्निं पर्युक्ष्य ॥ दक्षिणजान्वाच्य वामकरेण हृदयं स्पृशन्देवतीर्थेन सुसमिद्धेऽग्नौ जुहुयात् ॥ व्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुप्छंदांसि अग्निवायुसूर्या देवताः वैश्वदेवहोमे विनियोगः॥ ॐभूर्भुवःस्वःस्वाहा इदं प्रजापतये० ॥ ॐभूःस्वाहा इदमग्नये न मम॥ॐभुवः स्वाहा इदं वायवे न मम ॥ ॐस्वःस्वाहा इदं सूर्याय न मम देवकृतस्येत्यादिषण्णां यजुषां प्रजापतिर्ऋषिः यजुश्छंदः अग्निर्देवता शाकलहोमे विनियोगः ॥ॐदेव कृतस्यैनसो वयजनमसि स्वाहा इदमग्नये नमम ॥ ॐमनुष्यकृतस्यैनसो वयजनमसि स्वाहा इदमग्नये न मम ॥ ॐपितृकृतस्यैनसो वयजनमसि स्वाहा ॥ इदमग्नये न ममः ॥ ॐआत्मकृतस्यैनसोवयजनमसि स्वाहा इदमग्नये न मम ॥ ॐएनस एनसोवयजनमसि स्वाहा इदमग्नये न मम ॥ ॐयच्चाहमेनो विद्वांश्चकारयच्चाविद्वांस्तस्य सर्वस्यैनसो वयजनमसि स्वाहा ॥ इदमग्नये न मम ॥ ॐप्रजापतये स्वाहा इदं प्रजापतये न मम ॥ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥ इत्ययं द्वादशाहुतिहोमो देवयज्ञः ॥ अथभूतयज्ञः ॥ पर्जन्यादिकत्रिकवर्ज्यम् ॥ ॐ धात्रेनमः इत्यादि पूर्ववत्समाप्य ॥ इतिवैश्वदेवप्रयोगः ॥ दिवाकर्मरहितेमरीचिः ॥ रात्रौ प्रहरपर्यंतं दिवाकृत्यानि कारयेत् ॥ अवगाहं ब्रह्मयज्ञं सौरं च परिवर्जये-

त् ॥ तथा बृहस्पतिः ॥ दिवोदितानि कर्माणि प्रमादादकृतानि वै ॥ शर्वर्याः प्रथमे यामे तानि कुर्याद्यथाक्रमम् ॥ दिवोदिताः क्रियाः कार्या रात्रावपि यथाक्रमम् ॥ अवगाहं विना सौरं ब्रह्मयज्ञं च तर्पणं॥ स्मृतिः॥आचार्याः केचिदिच्छंति रात्रावपि च तर्पणम् ॥ तद्यजुःशाखिनामेव नान्येषां तु विधीयते ॥ मध्यान्हे समतिक्रांते सायंकाले भवेद्यदि ॥ सायंसंध्यामुपास्यादौ संध्या माध्यान्हिकी ततः॥सायंकालो व्यतीतश्चेदस्तं याति दिवाकरे ॥कुर्यादावर्तनीं संध्यां समारभ्य यथाक्रमम् ॥आवर्तनो मध्यान्हः ॥ कुर्वीतावर्तनीं संध्यां रात्रावपि न दुष्यति ॥ दद्यादर्घ्यं तु गायत्र्या सौरसूक्तं च वर्जयेत् ॥ मध्यान्हसंध्यारात्रौ चेत्प्रमादात्क्रियते यदि॥ सौरस्थाने जपेत्सूक्तं सौरं वैश्वानरीयकम् ॥अकरणे प्रायश्चित्तं व्यासः ॥ होमान्नदानरहितं न भोक्तव्यं कदाचन ॥ अकृत्वा पंचयज्ञांस्तु भुक्त्वा चांद्रायणं चरेत् ॥ पंचानामपि यज्ञानामेकैकाकरणे नरः ॥ उपवासं प्रकुर्वीत गायत्रीजपमेव वा ॥अष्टोतरसहस्रं तु पुनः पूतो भवेन्नरः॥ संध्यालोपे प्रायश्चित्तंस्मृत्यंतरे ॥ यः संध्यां यदि नोपास्ते ह्यग्निकार्यं न चेत्कृतम्॥गायत्र्यष्टशतं जप्यं प्रायश्चित्तं द्विजन्मनामिति ॥बौधायनः॥सप्ताहं प्रातरस्नायी संध्याहीनस्त्रिभिर्दिनैः ॥ द्वादशाहमनग्निः स्याद्द्विजः शूद्रत्वमाप्नुयात्॥तद्दोषपरिहारार्थं भानुवारे विशेषतः ॥ अथाशौचे सति संध्याप्रकारमाह जाबालिः॥अर्घ्यांता मानसी संध्या प्राणायामविवर्जितेति ॥

भारद्वाजः॥सूतके मृतके वापि प्राणायामं समंत्रकम्॥तथा मार्जनमंत्रांस्तु मनसोच्चार्य मार्जयेत् ॥ गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत्॥मार्जनं तु न वा कार्यमुपस्थानं न चैव हि॥गायत्रीं दशवारं द्वादशवारं जपेदित्याह॥आश्वलायनः॥ आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दशेति॥आपन्नो आपद्युक्तः अशुचिराशौचवान् ॥ सूतके विष्णुपूजा न कार्या ॥ तदुक्तं॥सूतके इत्युपक्रम्य हेमाद्रौ वाराहे॥पूर्वसंकल्पितं यत्तु व्रतं सुनियतव्रतैः॥तत्कर्तव्यंनरैःश्राद्धदानार्चितविवर्जितम्॥ पंचमहायज्ञा अपि न कार्याः ॥ होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा॥पंचयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः॥इतिसंवर्तनिषेधात् ॥ होमः सायंप्रातः क्रियमाणो नित्यहोमः ॥ सतु कार्यएव याज्ञवल्क्योपि ॥ वैतानौपासनाः कार्याः क्रियाश्चश्रुतिनोदिताः ॥ यद्यप्यत्रकार्या क्रिया इत्युक्तं तथाप्यसगोत्रेण कारणीयाः ॥ तथाच बृहस्पतिः ॥ सूतके मृतके चैव अशक्तौ श्राद्धभोजने ॥ प्रवासादिनिमित्तेषु कारयेन्नतु हापयेत् ॥ तथाच ॥ सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् ॥ पिंडयज्ञं चरुं होममसगोत्रेण कारयेत् ॥ पिंडयज्ञः पिंडपितृयज्ञः॥ चरुहोमः स्थालीपाकः। श्रवणाकर्म अश्वयुजीकर्माग्रयणप्रत्यवरोहणाष्टकादिकम् ॥ अत्र द्रव्यत्यागस्तु यजमानेन कार्य इति विज्ञानेश्वरः ॥ तथा ॥ वैश्वदेवं तथा श्राद्धं ब्रह्मयज्ञं च सूतके ॥ न कुर्यात्स्वयमन्येन कारयेन्न तु सर्वथा ॥ स्मृतिसारे ॥ कुर्या-

त्पंचमहायज्ञान्नित्यशः सूतकं विना ॥ नित्यं नैमित्तिकं काम्यं सूतकेऽपि च हापयेत् ॥ नित्यमौपासनं नैमित्तिकं उपरागे स्नानादिकम्॥ काम्यं आश्विने चंडिकापूजनादि सर्वथा न त्यजेत् ॥ अन्येन कारयेदित्यर्थः॥ तथा च ॥ संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ॥ न त्यजेत्सूतके चापि त्यजेद्गच्छेदधो द्विजः ॥

## अथ नित्यश्राद्धं मत्स्यपुराणे ॥

नित्यं तावत्प्रवक्ष्यामि अर्घ्यावाहनवर्जितम् ॥ अदैवं तद्विजानीयात्पार्वणं तद्धि कीर्त्तितम् ॥ प्रचेताः ॥ नावाहनाग्नौकरणं न पिंडो न विसर्जनम् ॥ व्यासः ॥ नित्यश्राद्धेऽथ गंधाद्यैर्द्विजानभ्यर्च्य शक्तितः ॥ सर्वान्पितृगणान्सम्यक्सहैवोद्दिश्य भोजयेत् ॥ आवाहनं स्वधाकारं नानुव्रज्य जपादिकम् ॥ ब्रह्मचर्यादिनियमो वैश्वदेवस्तथैव च ॥ नित्यश्राद्धे त्यजेदेतान्भोज्यान्नं प्रकल्पयेत् ॥ दत्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत् ॥ नित्यश्राद्धे तथा दर्शे मन्वादौ संक्रमे तथा ॥ युगादौ च विशेषेण श्राद्धं षट्पौरुषं विदुः ॥ एकमप्याशयेदन्नं षण्णामप्यन्वहं गृही ॥ एकमप्याशयेन्नित्यं पितृयज्ञार्थसिद्धये ॥ अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा ॥ अभ्युद्धृत्य यथाशक्ति किंचिदन्नं समाहितः॥ वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयन् ॥ कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ॥ पितॄनुद्दिश्य विप्रांस्तु भोजयेदशनादिना ॥ नार्पणं नच होमं च नाह्वानं न विसर्जनम् ॥ न पिंडदानं

विकिरं न दद्यादत्र दक्षिणाम् ॥ दक्षिणायास्तु विहितप्रतिषिद्धत्वाद्विकल्पः ॥ षोडशीग्रहणाग्रहणवत् ॥ नित्यश्राद्धं न कुर्वीत प्रसंगाद्यत्र सिध्यति ॥ श्राद्धांतरे कृतेऽप्यत्र नित्यत्वाच्च न दापयेत्॥यत्र पड्भ्यो दत्तं तत्र प्रसंगात्सिद्धिः॥यत्र न्यूनेभ्यस्तत्रावृत्तिः पश्वार्थोनुष्ठितप्रयाजैः पशुपुरोडाशप्रयाजानां यथाकाम्याग्निहोत्रेण नित्यस्य ॥ स्वाध्याये नार्चयेत्तेषां होमे देवान्यथाविधि ॥ पितॄञ्छ्राद्धविधानेन अन्नैर्भूतानि कर्मणा ॥ कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन च ॥ पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहत् ॥ एकमप्याशयेद्विप्रं पित्रर्थं पांचयाज्ञिके ॥ नचैवं पाचयेत्किंचिद्वैश्वदेवं प्रति द्विजः ॥ याज्ञवल्क्यः ॥ पड्दैवत्यं भवेच्छ्राद्धं कर्तव्यं प्रत्यहं द्विजैः ॥ नित्यकर्म समाप्याथ ब्राह्मणः श्रद्धयान्वितः ॥ अपसव्येन कर्तव्यं नित्यश्राद्धमदैवतम् ॥ पितॄनुद्दिश्य विप्रस्य भोक्तुमभ्यागतस्य च ॥ पादप्रक्षालनं कुर्यान्नामगोत्रं समुच्चरन् ॥ अर्चयेदासनं दद्यान्नमो वः पितरस्तथा ॥ गंधपुष्पादिकं कुर्याद्भोज्यान्नं परिषेचयेत् ॥ भोजने सघृतं चान्नं गायत्र्या चाभिमंत्रयेत् ॥ इदं विष्णुरिति मंत्रेण पितृभोज्यं निवेदयेत्॥ ये चेहेत्येनमर्चेच पितॄणां तु समाचरेत् ॥ ब्रह्मार्पणं ब्रह्म हविरित्युक्त्वा विनिवेदयेत् ॥ बालाः सुवासिनीवृद्धास्तथैवातुरकन्यकाः ॥ संभोज्यातिथिभृत्यांश्च दंपत्योः शेषभोजनम् ॥ चित्राहुतिप्रदानं च कृत्वा भोजनमाचरेत् ॥ सपंक्तौ ब्राह्मणस्यापि भुंजीयात्सह बंधुभिः ॥ इति नित्यश्राद्धविधिः ॥

## अथ प्रयोगः ॥

स्वागतवचनेन पङ्क्तिब्राह्मणान्द्वौ वा एकं वाभ्यर्च्य ॥ तद्यथा पितरः आगतं ॥ सुस्वागतमिति प्रत्युक्तिः। पितः भुर्भुवः स्वःइदं वः पाद्यं ॥ सुपाद्यमिति प्रतिवचनम् ॥ ॐ शंनो-देवी०तु नः॥ पितृभ्यो अन्नः स्वन्नः पितृभ्यो गंधाः सुगंधाः पितृभ्यो अक्षतपुष्पं स्वक्षतपुष्पम् ॥ ॐपितृभ्यः स्वधाः धध्वम्॥ गोत्र अस्मत्पितः अमुकशर्मन् वसुरूप एप ते पा-दार्घ्यः संपद्यताम् ॥ अस्तु पादार्घ्यः ॥ एवं पितामहादी-नाम् ॥ ततः वंदनं ॥ आपः शि०आचम्य गृहं प्रविश्य गृहाभ्यंतरे दक्षिणाग्रास्तृतकुशासनेषु समुपवेश्य स्वयमा-चम्य उपविश्य दर्भपाणिः श्रीवासुदेवं संस्मृत्य सावित्रीं पठित्वा प्राणानायम्य देशकालौ संकीर्त्य प्राचीनावीती द-क्षिणामुखः सव्यं जान्वाच्य अमुकगोत्राणां अस्मत्पितृपि-तामहप्रपितामहानां वसुरुद्रादित्यस्वरूपाणां द्वितीयगो-त्राणां मातामहप्रमातामहवृद्धप्रमातामहानां अमुकशर्मणां वसुरुद्रादित्यस्वरूपाणां नित्यश्राद्धमहं करिष्ये ॥ ततो द्वि-गुणितदर्भानादाय अमुकगोत्रस्य अस्मत्पितुरमुकशर्मणो वसुरूपस्येदमासनं स्वासनं अत्रास्यतां धर्मोसि आपः पित्रे क्षणः क्रियताम् ॐतथा प्राप्नोतु भवान् प्राप्तवानि हस्तप्रक्षा-लनं दत्त्वा विष्टरार्थं तिलकुशानादाय अयं विष्टरः सुविष्टरः एवंपितामहादीनां॥एकब्राह्मणपक्षे एकप्रयोगेनासनादि॥ततो गंधादिकं यथासंभवं दत्त्वा द्विगुणकुशजलान्यादाय अमुक

गोत्रेभ्यःअस्मत्पितृपि० वृद्धप्रमातामहेभ्यः इमानि गंधपुष्पधूपदीपाच्छादनानि स्वधा संपद्यंताम् ॥ ततःपत्रावलिं विधाय भस्मादिना चतुरस्रादिमंडलेन वेष्टयित्वा श्राद्धार्थमन्नं व्यंजनादिकं परिवेष्य गायत्र्या प्रोक्षणम् ॥ ॐइदं वि० पितरः कव्यं रक्षध्वं अंगुष्ठमूलमन्नेवगाह्य ॥ अपहता इति तिलान्विकीर्य ॥ सव्यमुदकोपस्पर्शः ॥ ततोपसव्यं कृत्वा ॥ वामकरेण पत्रावलिं दधानो दक्षिणेन पाणिना जलकुशतिलानादाय वामं जान्वाच्यामुकगोत्राः अस्मत्पितृपितामहप्रपितामहाः अमुकशर्माणः वसुरुद्रादित्यस्वरूपाः एतद्वोन्नं दत्तं दास्यमानं चातृप्तेरमृतरूपेण स्वधा संपद्यतां इदं गोत्रेभ्यः पितृपि० दित्यस्वरूपेभ्यः दत्तं न मम ॥ इत्येकब्राह्मणपक्षे ब्राह्मणद्वयपक्षे पृथक्पृथक्त्रिकोच्चारणम् ॥ प्रतिव्यक्ति ब्राह्मणपक्षे ॥ अमुकगोत्र अस्मत्पितः अमुकशर्मन्वसुरूप इदमन्नमुपनीतमुपवेष्यमाणं चा तृप्तेः स्वधा नमः एवमन्येषाम् ॥ ये चेह पित० स्वधा पितृभ्यः ॥ ततः सव्यं कृत्वोदकस्पर्शः ॥ ब्रह्मार्पणमित्यादि श्लोकान्पठित्वा प्राचीनावीतिना एको विष्णुर्मह० । अनेन नित्यश्राद्धीयब्राह्मणभोजनेन श्रीपरमेश्वरः प्रीयतां न मम ॥ ततोऽन्नपुरुषसूक्तं जपित्वा आचमनं दत्वा यथाशक्ति दक्षिणया संतोष्य प्रेषयेत् ॥ अत्र कालदेशनियमाः कर्तृभोक्तृ नियमाश्च न भवंति ॥ भोक्तृभोज्याद्यसंपत्तावुद्धृत्यान्नं यथा शक्तितः ॥ षोढा विभज्य मनसा पितॄनुद्दिश्य तत्त्यजेत् ॥ दिवाऽसंभवे रात्रौ प्रहरपर्यंतं कार्यम् इतिनित्यश्राद्धम् ॥

## अथ भोजनविधिः ॥

तत्र मनुः ॥ सायंप्रातर्द्विजातीनामशनं श्रुतिनोदितम् ॥ नांतराभोजनं कुर्यादग्निहोत्रसमो विधिः ॥ गोभिलः ॥ ततो भोजनवेलायां कृत्वाचारं सदात्मवत् ॥ पोष्यवर्गसमोपेतो भोजनं कारयेद्बुधः ॥ माता पिता गुरुर्भार्या पुत्रा दासास्तथैवच ॥ अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग इति स्मृतः ॥ अश्वलायनस्मृतौ ॥ अष्टम्यां च चतुर्दश्यां रात्रावश्नाति नित्यशः ॥ एकादश्यामुपवसेच्छुक्लपक्षे विशेषतः ॥ अर्कपर्वदिने रात्रौ चतुर्दश्यष्टमी दिवा ॥ एकादश्यामहोरात्रं भुक्त्वा चांद्रायणं चरेत् ॥ स्मृतिसारसमुच्चये ॥ प्राङ्मुखः स्वयमश्नीयात्प्रतीच्यां वा यथासुखम् ॥ उत्तरे पितृकृत्येषु दक्षिणे तु विवर्जयेत् ॥ आयुष्यं प्राङ्मुखो भुंक्ते यशः श्रीं दक्षिणामुखः॥श्रीकामः पश्चिमे भुंक्ते न कदाचिदुदङ्मुखः॥ सोमवारे तथाभ्यंगे वर्जयेत्तु॥तथाबुधः॥ पारिजाते॥ पितरौ जीवमानौ चेन्नाश्नीयाद्दक्षिणामुखः ॥ भोजनेमंडलमाह बौधायनः॥ चतुरस्रं त्रिकोणं च वर्तुलं चार्द्धचंद्रकम् ॥ कर्तव्यमानुपूर्व्येण मंडलं ब्राह्मणादिषु ॥शंखः॥ आदित्या वसवो रुद्रा ब्रह्मा चैव पितामहः ॥ मंडलान्नूपजीवंति तस्मात्कुर्वंति मंडलम् ॥ मार्कंडेयः ॥ यातुधानाः पिशाचाश्च ह्यसुरा राक्षसास्तथा ॥ घ्नंति ते बलमन्नस्य मंडलेन विवर्जयेत् ॥ एक एव तु यो भुंक्ते विमले कांस्यभाजने ॥ चत्वारि तस्य वर्धंते आयुः प्रज्ञा यशो बलम् ॥ हेमाद्रावत्रिः ॥ पंचाशतप-

लिकं कास्यं ह्यधिकं भोजनाय वै ॥ गृहस्थैस्तुसदाकार्य-
मभावे हेमरौप्ययोः॥ क्वचिन्निषेधः स्मृतिचंद्रिकायां प्रचेताः
॥ तांबूलाभ्यंजनं चैव कांस्यपात्रे च भोजनम् ॥ यतिश्च
ब्रह्मचारी च विधवा च विवर्जयेत् ॥ पारणाहे तथाश्राद्धे
वर्जयेत्कांस्यभोजनम् ॥ मोहाच्च यदि भुंजीत कृतं कर्म च
निष्फलम्॥भोजने ग्राह्यपात्राणि॥ रंभाकुटजमध्वाम्रजंबूपन-
सचंपकाः ॥ पद्मोदुंबरपालाशब्रह्मपत्रकमेवच ॥ निषिद्धा-
नि॥वटाश्वत्थार्कपर्णेषु कुंभमिंदुकपर्णयोः॥कोविदारकरंजा-
नां भुक्त्वा चांद्रायणं चरेत् ॥ करे कर्पटके चैव शिलायां
त्वद्रिभाजने॥ भिन्नकांस्ये च वस्त्रे च भुक्त्वा चांद्रायणं
चरेत् ॥ पैठीनसिः॥सौवर्णे राजते ताम्रे पद्मपत्रपलाशयोः ॥
भाजने भोजने चैव त्रिरात्रफलमश्नुते ॥ प्रचेताः॥मृन्मये
पर्णपृष्ठे वा आयसे ताम्रभाजने ॥ नाश्नीयान्न पिबेच्चैव नक-
रे न तथासने॥व्यासः ॥ पंचार्द्रोभोजनं कुर्यात्प्राङ्मुखो मौ-
नमास्थितः ॥ हस्तौ पादौ तथैवास्यमेषु पंचार्द्रता मता॥
हस्तौ पादौ च प्रक्षाल्याचम्येत्यर्थः॥परिवेषणं स्मृत्यंतरे॥
शाकादीन्पुरतः स्थाप्य भक्ष्यं भोज्यं च वामतः॥अन्नं मध्ये
प्रतिष्ठाप्यं दक्षिणे घृतपायसम् ॥ ओदने परमान्ने च आज्य-
पात्रं यदि स्थितम् ॥ तदाज्यं च भवेद्रक्तं तदन्नं मांसमुच्य-
ते ॥ घृतमपि भोजनात्प्रागेवग्राह्यं ननूच्छिष्टे ॥ घृतोच्छिष्टो
घृतमादद्यादिति स्मृतिचंद्रिकाकारधृतविष्णुवाक्यात् ॥
शातातपः॥ हस्तदत्तानि चान्नानि प्रत्यक्षं लवणं तथा ॥

मृत्तिकाभक्षणे चैव गोमांसाशनवत्स्मृतम् ॥ प्रत्यक्षमपि लवणं हस्तदत्तमेव निषिद्धम् ॥ तथा पैठीनसिः ॥ लवणं व्यंजनं चैव घृतं तैलं तथैव च ॥ लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेदिति ॥ शूलपाणौ भविष्ये ॥ सैंधवं लवणं यच्च यच्च सामुद्रिकं भवेत् ॥ पवित्रे परमे ह्येते प्रत्यक्षे अपि नित्यशः ॥ इति ब्रह्मपुराणे ॥ अन्नं दृष्ट्वा प्रणम्यादौ प्रांजलिः कथयेत्ततः ॥ अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वंदयेत् ॥ पात्राद्रसं समुद्धृत्य समवपात्रांतरे क्षिपेत् ॥ जलमादाय मंत्रेण गोग्रासं विनिवेदयेत् ॥ पात्रं धृत्वा तु वामेन यावत्स्याद्भोजनं हि तत् ॥ पाणिना दक्षिणेनैव पर्युक्ष्य परिषेचयेत् ॥ अंगुष्ठस्तर्जनी चैव मध्यमा च तृतीयका ॥ तिस्रो ह्येकांगुली चैव प्रशस्ता पात्रधारणे ॥ सत्यं त्वर्तेन वै प्रातर्वारिणा परिषिंचयेत् ॥ तोकेन किरिके चैव शंभवेन विशेषतः ॥ अभिमंत्र्यान्नं भुंजीत सर्वक्रतुमवाप्नुयात् ॥ सायंकाले तथैव स्यादृतं त्वा चादितः क्रमात् ॥ अन्नेनैव घृताक्तेन नमस्कारेण वै भुवि ॥ तिस्र एवाहुतीर्दद्याद्भोजनादौ तु दक्षिणे ॥ उद्धृत्य किंचिदन्नाग्र्यं धर्मराजाय वै बलिम् ॥ दत्वाथ चित्रगुप्ताय हस्तौ प्रक्षालयेद्द्विजः ॥ अप्रक्षालितकरो भुंक्ते रौरवं नरकं व्रजेत् ॥ चित्राय चित्रगुप्ताय प्रेतेभ्यश्चेदमुच्चरेत् ॥ स्मृतिः ॥ बदरीफलमात्रान्नमंगुल्यग्रैर्विनिक्षिपेत् ॥ यमाय धर्माय चित्राय भूतेभ्यश्च ततो जलम् ॥ चित्राहुतीरनुद्धृत्य यो भुंक्ते ग्रासपंचकम् ॥ अयं स केवलं भुंक्ते ज्ञानतोज्ञानतोपि वा ॥ भोजनादौ बलिर्मुक्तः समुद्धृत्य हि भोजनम् ॥ अनुद्धृत्य तु

यो भुंक्ते प्राणायामाष्टकं चरेत् ॥ आपोशानमिति प्राहुर्भोजनादौ पिबेज्जलम् ॥ अमृतोपस्तरणमसि स्वाहांतं मंत्रमुच्चरेत् ॥ आपोशानमकृत्वा तु यो भुंक्ते द्विजसत्तमः ॥ अभोज्यं तद्भवेदन्नं भुक्त्वा चांद्रायणं चरेत्॥आपोशानं करे कृत्वा पात्रेकृत्वा तिलोदकम् ॥ श्वानमूत्रसमं तोयं पुनः पूरयते यदि ॥ आपोशनार्थं यत्तोयं धृतं चेन्निसृतं यदि ॥ हस्तं प्रक्षाल्य तोयेन पुनश्चोद्धारयेज्जलम् ॥ आपोशानकरो विप्रो यद्याशीर्वचनं पठेत् ॥ अभोज्यं तद्भवेदन्नं दाता प्राप्नोति किल्बिषम्॥ यजमानकृतं पापमन्नमाश्रित्य तिष्ठति॥अतो न प्रतिगृह्णीयात्प्राणैः कंठगतैरपि ॥ अन्नं ब्रह्म रसो विष्णुर्भोक्ता देवो महेश्वरः॥ एवं ध्यात्वा द्विजो भुंक्ते ह्यन्नदोषैर्न लिप्यते॥ प्राणाहुतीरहुत्वा तु यश्चान्नं परिमर्दयेत् ॥ मर्दितं भोजयेद्यस्तु भुक्त्वा चांद्रायणं चरेत्॥घृतहीनं तु यो भुंक्ते नरश्चाहुतिपंचके॥ पश्चाद्घृतेन यो भुंक्ते नरश्चांद्रायणंचरेत् ॥अभ्यर्च्य सर्पिषैकैकां प्राणानामेव चाहुतिम् ॥ संगृह्य विधिना मंत्रैर्हुनेत्प्राणाहुतिं द्विजः ॥ प्राणाहुतिनियममाह शौनकः ॥ तर्जनीमध्यमांगुष्ठैः प्राणस्यैवाहुतिर्भवेत् ॥ स्वाहांताः प्रणवाद्याश्च नाम्ना मंत्राश्च वायवः॥ आश्वमेधिके ॥ यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप ॥ तथा समाहितः कुर्यात्प्राणाहुतिमतंद्रित इति ॥ अनेन विधिना विप्रो वाग्यतो भोजनं चरेत् ॥ स्नास्यतो वरुणः शक्तिं जुह्वतो निर्हरेत्श्रियम् ॥ भुंजतो मृत्युरायुष्यं तस्मान्मौनं त्रिषु स्मृतम्॥ जीवत्पितृकस्य मौन-

मन्योन्यं स्पृशते यदि॥भुक्त्वा तदन्नमत्याज्यं गायत्र्यष्टशतं जपेत् ॥ स्मृत्यंतरे ॥ भवेदुच्छिष्टसंस्पर्शो भोक्तुर्वा भाजनस्यच ॥ अन्नं तदेव भोक्तव्यमत्याज्यं भाजनस्थितम् ॥ पुनरन्नं न भोक्तव्यं भुक्त्वा चांद्रायणं चरेत्॥ततश्चैव जपेद्देवीं शतमष्टोत्तरं सुधीः॥शेषमुद्धृत्य भोक्तव्यं श्रूयतामत्र कारणम् ॥ तृप्तो दद्यादन्नशेषं भूमौ दुर्गतितृप्तये ॥ भुक्त्वा पीत्वा तु यत्पात्रं रिक्तं त्यजति यो नरः॥स नरः क्षुत्पिपासार्तो भवेज्जन्मनि जन्मनि॥मंत्रः॥ यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ॥ दुर्गतीनां मया दत्तमक्षय्यमुपतिष्ठतु ॥ देवलः ॥ भुक्तोच्छिष्टात्समादाय सर्वस्मात्किंचिदाचमनम् ॥ उच्छिष्टभागधेयेभ्यः सोदकं निर्वपेद्भुवि ॥ यमस्तु ॥ रौरवे पुण्यनिलये पद्मार्बुदनिवासिनाम् ॥ अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु ॥ ततोऽमृतापिधानमसि स्वाहेत्यपः पिबेत् ॥ व्यासः ॥ अर्द्धं पीत्वा तु गंडूषमर्द्धं त्याज्यं महीतले ॥ रसातलगता नागास्तेन प्रीणंति नित्यशः ॥ अथ प्रयोगः ॥ पाणिपादौ प्रक्षाल्याचम्य श्रीपर्णदार्वादिनिर्मिते पीठे प्राङ्मुखः प्रत्यङ्मुखो वोपविश्य भूमिं प्रोक्ष्य चतुरस्रं मंडलं कृत्वा तदुपरि हेमरौप्ययोरभावे कांस्यपात्रमुक्तपात्राणां मध्येऽन्यतमं पात्रं वा निधाय तत्र मध्येऽन्नं वामे भक्ष्य भोज्यं दक्षिणे घृतपायसं पुरतः शाकादीन् एवं परिवेषणं कारयित्वा प्रांजलिरन्नं प्रणम्यास्माकं नित्यमेतदस्त्विति प्रार्थ्य ॥ पितुन्नुस्तोषंमहोधर्माणं तविषिम् ॥ यस्य त्रितो व्योजसा वृत्रं विपर्वं मर्दयेत्॥अग्निरइमीज० इति मंत्राभ्यां

स्तुत्वा ॥ ॐ मानस्तोके० ॥ ॐनमोवः किरि० ॥ ॐनमः शंभवाय० इत्युदकेनाभिमंत्र्य गायत्र्या संप्रोक्ष्य ॥ ॐसत्यं त्वर्तेन परिषिंचामीति दिवा ॥ रात्रौ ऋतं त्वा सत्येन परिषिंचामि ॥ इति प्रदक्षिणमन्त्रं परिषिच्य दक्षिणतो भुव्युदकधारां कृत्वा तत्र बलित्रयं दद्यात् ॥ तद्यथा ॥ ॐभूपतये स्वाहा नमः ॥ ॐभुवनपतये स्वाहा नमः ॥ ॐ भूतानां पतये स्वाहा नमः ॥ एवं बलित्रयं ग्रासंस्थं दत्वोपर्युदकं दत्वा बलीनुद्धृत्य हस्तं प्रक्षाल्य आपोशानार्थं जलमादाय वामहस्तमध्यमानामिकांगुष्ठैर्भोजनपात्रमालभ्य ॥ अन्नं ब्रह्मा रसो विष्णुर्भोक्ता देवो महेश्वरः ॥ एवं ध्यात्वा तु यो भुंक्ते सोन्नदोषैर्नलिप्यते ॥ अंतश्चरसि भूतेषु गुहायां विश्वतोमुखः ॥ त्वं यज्ञस्त्वं वषट्कारस्त्वं रुद्रस्त्वं प्रजापतिः ॥ त्वं विष्णोः परमं पदममृतोपस्तरणमसि स्वाहा इति मंत्रेण निःशब्दं चुलकं पिबेत् ॥ तर्जनीमध्यमांगुष्ठैः ॥ ॐ प्राणाय स्वाहा इदं प्राणाय न मम ॥ मध्यमानामिकांगुष्ठैः ॥ ॐ अपानाय स्वाहा इदमपा०कनिष्ठिकानामिकांगुष्ठैः ॥ ॐव्यानायस्वाहा इदंव्याना० ॥ कनिष्ठिकातर्जन्यंगुष्ठैः ॥ ॐउदानाय स्वाहा इदमुदा० ॥ सर्वांगुल्यग्रेण ॥ ॐसमानाय स्वाहा इदं समानाय न मम ॥ तास्तु दंतैर्न चर्वयेत् ॥ उक्तं च ॥ प्राणे निगदिते शृंगी प्राणेऽपाने च मुद्रिका ॥ समाने समाना प्रोक्ता उदानस्तर्जनीमुखैः ॥ ततो जलं स्पृष्ट्वा ॥ शिखाग्रंथिं मुक्त्वा ॥ तत्र मंत्रः ॥ ॐब्रह्मपाणिसहस्राणिरुद्रशूलशतानि च ॥ विष्णुचक्रसहस्राणि शिखामुक्तिं करोम्यहम् ॥

द्भुक्त्वा रात्रौ च सर्वदा ॥ अभ्यंगे चैव मांगल्ये दिवा वाप्यथवा निशि ॥ प्रातःकाले फलाधिक्यं चूर्णाधिक्यं तु मध्यतः ॥ पर्णाधिक्यं भवेद्रात्रौ स लक्ष्मीवान्नरो भवेत् ॥ पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसंभवः ॥ चूर्णपत्रं हरत्यायुः शिरा बुद्धिविनाशिनी॥मूलाग्रं तु परित्यज्य शिरांचैव परित्यजेत् ॥ सचूर्णं खादयेत्पत्रमायुःकीर्तिकवान्भवेत् ॥ अनिधाय मुखे पर्णं पूगं खादति यो नरः॥सप्तजन्म दरिद्री स्यादंते न स्मरते हरिम् ॥ पंचसप्ताष्टपर्णानि दश द्वादश वापि वा॥दद्यात्स्वयं च गृण्हीयादिति कैश्चदुदीरितम् ॥ तर्जन्या चूर्णमादाय तांबूलं न तु खादयेत् ॥ यदि वा खादयेन्मूढो नरकं प्रतिपद्यते ॥मध्यमांगुलिनादाय चूर्णं पर्णस्य लेपयेत् ॥ अंगुष्ठेनाथवाचैवविप्राणामेष निर्णयः ॥ मृताशौचे तथा श्राद्धे मातापित्रोर्मृतेहनि ॥ उपवासे च तांबूलं दिवारात्रौ विवर्जयेत् ॥ पक्षश्राद्धे तथा दर्शे युगमन्वंतरादिषु ॥ श्राद्धं निर्वृत्य भुक्त्वा तु तांबूलं खादयेद्विजः ॥ मोहादकृत्वा यः श्राद्धं तांबूलं यदि खादयेत् ॥ श्राद्धहंता भवेत्कर्ता रौरवं नरकं व्रजेत् ॥ इति तांबूलभक्षणम् ॥ इति पंचमदिनभागः ॥

## अथ षष्ठादिभागदिनकृत्यमाह ॥

दक्षः ॥ इतिहासपुराणादौ षष्ठसप्तमकौनयेत्॥अष्टमे लोकयात्रा तु बहिःसंध्यां ततःपुनः॥१॥अथ सायंसंध्याप्रयोगः॥ यमः॥स्वेरस्तमया त्पूर्वं घटिकैका यदा भवेत्॥ सायंसंध्यामुपासीत कुर्याद्धोमं च पूर्ववत्॥सायंसंध्या प्रातर्वत् ॥ संकल्पा-

वाहनाचमनार्घ्योपस्थानजपनिवेदनेषु विशेषः ॥ पाणिपादौ प्रक्षाल्याचम्य ॥ देशकालौ संकीर्त्य ॥ ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं विष्ण्वावाप्त्यै सायंसंध्योपासनमहं करिष्ये ॥ ततःमार्जनादिन्यासांतं पूर्ववत् ॥ अथावाहनं ॥ वृद्धांसरस्वतीं कृष्णांपीतवस्त्रांचतुर्भुजाम् ॥ शंखचक्रगदापद्महस्तां गरुडवाहिनीम् सामवेदकृतोत्संगांवैष्णवीं विष्णुरूपिणीम् ॥आवाहयाम्यहं देवीमायांतीं सूर्यमंडलात्॥ आगच्छ वरदे देवि त्र्यक्षरे विष्णुवादिनि ॥ सरस्वति छंदसां मातर्विष्णुयोनि नमोस्तुते॥ ततः पूर्ववत्प्राणायामंकृत्वा हस्तेन जलमादाय अग्निश्चमेति मंत्रेणापः पिबेत् ॥ अग्निश्च मेति नारायण ऋषिः प्रकृतिश्छंदःमन्युमन्युपतिर्देवता मंत्राचमने विनियोगः ॥ ॐअग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षंतां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुंपतु यत्किंच दुरितं मयि ॥ इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ ततो द्विराचमनं ॥ आपोहिष्ठेत्यादिअघमर्षणांतं कृत्वा पश्चिमाभिमुखस्तिष्ठन्पाणिभ्यां जलमादाय सावित्र्याभिमंत्र्य सायंसंध्यासरस्वतीश्रीसवित्रे इदमर्घ्यं समर्पयामि ॥ इति त्रिर्दद्यात् ॥ अथोपस्थानम् ॥ॐइमम्मेव॰तत्वायामि॰ त्वन्नो॰सत्वन्नो॰ ॥ शेषं पूर्ववत् ॥ अनेनसायंसंध्यांगभूते नाष्टोत्तरशतसंख्याकेन गायत्रीजपेन भगवान् विष्णुरूपी सवितादेवता प्रीयतां न मम ॥ पूर्ववत् इतिसायंसंध्याप्रयो

गः ॥ अथसायमौपासनम् ॥ पत्न्या सहाग्नेः पश्चादुपविश्या-चम्य॥प्राणायामंकृत्वादेशकालौसंकीर्त्य॥ श्रीपरमेश्वरप्रीत्यर्थं सायमौपासनमहं करिष्ये ॥ तत्रापि प्रजापतिं अमुकद्रव्यै र्यक्ष्ये ॥ अग्निमपरेण पात्रोपकल्पनम् ॥ उपयमनकुशाः स-मिधस्तिस्रः ॥ मणिकोदकं होमद्रव्यं च ॥ उपयमनकुशा-नादाय ॥ तिष्ठन्समिधोभ्याधाय ॥ मणिकोदकेनाग्निं पर्युक्ष्य दक्षिणं जान्वाच्य हृदि सव्यहस्तं निधाय पाणिना जुहुयात्॥ अग्निं प्रजापतिं अनयोर्मंत्रयोः प्रयोगा ऋषयः गायत्र्यनुष्टुभौ छंदांसि क्रमेणाग्नि प्रजापती देवते ॥ सायं होमे विनि-योगः ॥ ॐअग्नये स्वाहा इदमग्न० यदि त्यागं विधाय हविः प्रक्षिपेत् ॥ संस्रवरक्षणम् ॥ पुनः हविरादाय ॥ ॐप्रजापतये स्वाहा इदंप्र०संस्रवप्राशनम् ॥ अत्र समस्त्वेत्युपस्थानमिति जयरामभाष्ये ॥ समस्त्वेति नवर्चस्याग्निर्ऋषिः त्रिष्टुप्छंदः अग्निर्देवता अग्न्युपस्थाने विनियोगः ॥ समस्त्वाग्न ऋतवो इत्यादि ॥ १ ॥ ततो नमस्कारः ॥ त्र्यंबकमिति मंत्रेण विभूतिवंदनम् ॥ प्रमादादित्यादि ॥ अनेन सायमौपासनेन भगवान् यज्ञरूपी परमेश्वरः प्रीयतां न मम ॥

## अथशिवपूजा ॥

उपास्य पश्चिमां संध्यां हुत्वाग्निं तमुपास्य च॥भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत् ॥ यो न पूजयते नित्यं लिंगं त्रिभुवनेश्वरम्॥ नासौ स्वर्गस्य मोक्षस्य न च राज्यस्य भाजनम् ॥ ब्रह्मोत्तरखंडे ॥ महाप्रदोषवेलासु शिवपूजा

विमुक्तिदा ॥ शिवपूजां सदा कुर्याद्बुद्धिमानिह मानवः ॥ अशक्तश्चेत्कृतां पूजां पश्येद्भक्तिविनम्रधीः ॥ अश्रद्धयापि यः कुर्याच्छिवपूजां विमुक्तिदाम् ॥ पश्येद्दासोपि कालेन प्रयाति परमं पदम् ॥ प्रातःकाले शिवे दृष्टे नैश्यं पापं विनश्यति ॥ आजन्मकृतमध्याह्ने सायाह्ने सप्तजन्मजमिति पुराणवचना-न्निशि शिवपूजनम् शिवदर्शनंच कुर्यात् ॥ ततः पंचोपचारैः शिवपूजां कुर्यात् ॥ अथ दीपकालमाहमरीचिः ॥ रवेरस्तं समारभ्य यावत्सूर्योदयो भवेत् ॥ यस्य तिष्ठेद्गृहे दीपस्तस्य नास्ति दरिद्रता॥आयुर्दःप्राङ्मुखो दीपो धनदः स्यादुदङ्मुखः ॥ प्रत्यङ्मुखो दुःखदोऽसौ हानिदो दक्षिणामुखः ॥ प्रत्यङ्मुखनिषेधस्तु कार्यकारिनित्यदीपविषय एव ॥ श्रीकार्तवीर्यादिदीपः प्रत्यङ्मुख एव स्थाप्यः ॥ स्थापिता यदि चैव स्युर्दिक्षुदीपाश्चतसृषु ॥ शुभदास्तेऽन्नदाः सर्वे नदोषस्तत्र कश्चन ॥ अथ स्वापविधिः ॥ मात्स्ये ॥ शुचिदेशं विविक्तं तु गोमयेनोपलेपयेत् ॥ वैदिकैर्गारुडैर्मंत्रैरभिमंत्र्य स्वपेत्ततः ॥ मांगल्यं पूर्णकुंभंच शिरस्थाने निधापयेत् ॥ रात्रिसूक्तं जपन्रात्रौ रात्रिक्षेमो भवेन्नरः॥ स्कांदे ॥ उपानहौ वैणवं दंडमंबुपात्रं तथैव च ॥ तांबूलादीनि सर्वाणि समीपे स्थापयेद्गृही ॥ मार्कंडेयः ॥ नार्द्रवासाश्च नग्नश्च नोत्तरापरमस्तकः ॥ नाकाशे सर्वतः शून्ये न च चैत्यद्रुमे तथा ॥ स्वगृहे प्राक्शिराः कुर्याच्छ्वाशुरे दक्षिणामुखः॥प्रत्यङ्मुखः प्रवासे च न कदाचिदुदङ्मुखः ॥ तृणे देवालये चैव पाषाणे चैव पल्लवे ॥

गः ॥ अथसायमौपासनम् ॥ पत्न्या सहाग्नेः पश्चादुपविश्या-चम्य॥प्राणायामंकृत्वादेशकालौसंकीर्त्य॥श्रीपरमेश्वरप्रीत्य-र्थं सायमौपासनमहं करिष्ये ॥ तत्रापि प्रजापतिं अमुकद्रव्ये यक्ष्ये ॥ अग्निमपरेण पात्रोपकल्पनम् ॥ उपयमनकुशाः स-मिधस्तिस्रः ॥ मणिकोदकं होमद्रव्यं च ॥ उपयमनकुशा-नादाय ॥ तिष्ठन्समिधोभ्याधाय ॥ मणिकोदकेनाग्निं पर्युक्ष्य दक्षिणं जान्वाच्य हृदि सव्यहस्तं निधाय पाणिना जुहुयात्॥ अग्निं प्रजापतिं अनयोर्मंत्रयोः प्रयोगा ऋषयः गायत्र्यनुष्टु-भौ छंदांसि क्रमेणाग्नि प्रजापती देवते ॥ सायं होमे विनि-योगः ॥ ॐअग्नये स्वाहा इदमग्न० यदि त्यागं विधाय हविः प्रक्षिपेत् ॥ संस्रवरक्षणम् ॥ पुनः हविरादाय ॥ ॐप्रजापतये स्वाहा इदंप्र०संस्रवप्राशनम् ॥ अत्र समस्त्वेत्युपस्थानमिति जयरामभाष्ये ॥ समस्त्वेति नवर्चस्याग्निर्ऋषिः त्रिष्टुप्छं-दः अग्निर्देवता अभ्युपस्थाने विनियोगः ॥ समस्त्वाग्न ऋत-वो इत्यादि ॥ १ ॥ ततो नमस्कारः ॥ त्र्यंबकमिति मंत्रेण विभूतिवंदनम् ॥ प्रमादादित्यादि ॥ अनेन सायमौपासनेन भगवान् यज्ञरूपी परमेश्वरः प्रीयतां न मम ॥

## अथशिवपूजा ॥

उपास्य पश्चिमां संध्यां हुत्वाग्निं तमुपास्य च॥भृत्यैः प-रिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत् ॥ यो न पूजयते नि-त्यं लिंगं त्रिभुवनेश्वरम्॥नासौ स्वर्गस्य मोक्षस्य न च राज्य-स्य भाजनम् ॥ ब्रह्मोत्तरखंडे ॥ महाप्रदोषवेलासु शिवपूजा

विमुक्तिदा ॥ शिवपूजां सदा कुर्याद्बुद्धिमानिह मानवः ॥ अशक्तश्चेत्कृतां पूजां पश्येद्भक्तिविनम्रधीः ॥ अश्रद्धयापि यः कुर्याच्छिवपूजां विमुक्तिदाम् ॥ पश्येद्दासोपि कालेन प्रयाति परमं पदम् ॥ प्रातःकाले शिवे दृष्टे नैश्यं पापं विनश्यति ॥ आजन्मकृतमध्याह्ने सायाह्ने सप्तजन्मजमिति पुराणवचनान्निशि शिवपूजनम् शिवदर्शनंच कुर्यात् ॥ ततः पंचोपचारैः शिवपूजां कुर्यात् ॥ अथ दीपकालमाहमरीचिः ॥ रवेरस्तं समारभ्य यावत्सूर्योदयो भवेत् ॥ यस्य तिष्ठेद्गृहे दीपस्तस्य नास्ति दरिद्रता॥आयुर्दःप्राङ्मुखो दीपो धनदः स्यादुदङ्मुखः ॥ प्रत्यङ्मुखो दुःखदोऽसौ हानिदो दक्षिणामुखः ॥ प्रत्यङ्मुखनिषेधस्तु कार्यकारिनित्यदीपविषय एव ॥ श्रीकार्तवीर्यादिदीपः प्रत्यङ्मुख एव स्थाप्यः ॥ स्थापिता यदि चैव स्युर्दिक्षुदीपाश्चतसृषु ॥ शुभदास्तेऽन्नदाः सर्वे नदोषस्तत्र कश्चन ॥ अथ स्वापविधिः ॥ मात्स्ये ॥ शुचिदेशं विविक्तं तु गोमयेनोपलेपयेत् ॥ वैदिकैर्गारुडैर्मन्त्रैरभिमंत्र्य स्वपेत्ततः ॥ मांगल्यं पूर्णकुंभं च शिरस्स्थाने निधापयेत् ॥ रात्रिसूक्तं जपन्रात्रौ रात्रिक्षेमो भवेन्नरः॥ स्कांदे ॥ उपानहौ वैणवं दंडमंबुपात्रं तथैव च ॥ तांबूलादीनि सर्वाणि समीपे स्थापयेद्गृही ॥ मार्कंडेयः ॥ नार्द्रवासाश्च नग्नश्च नोत्तरापरमस्तकः ॥ नाकाशे सर्वतः शून्ये न च चैत्यद्रुमे तथा ॥ स्वगृहे प्राक्शिराः कुर्याच्छ्वाशुरे दक्षिणामुखः॥प्रत्युङ्मुखः प्रवासे च न कदाचिदुदङ्मुखः ॥ तृणे देवालये चैव पाषाणे चैव पल्लवे ॥

अंगणे द्वारदेशस्य मध्यभागे गृहस्य च॥रिक्तभूमौ तथा लोष्टे पार्श्वे चास्थिषु सन्निधौ ॥ शून्यालये श्मशाने च वृक्षमूले च तुष्पथे ॥माता वा भगिनीवापि तथा चान्यास्त्रियोपिवा ॥ एतासां संनिधौ चैव न स्वपेद्ब्राह्मणः क्वचित् ॥ भोजनानंतरं पुस्तकादिदर्शनेन शर्वरीप्रथमभागं नीत्वा स्वपेत् ॥ ततः शयनगृहं गत्वास्तीर्णशय्यायां सुत्रामाणमिति मंत्रं पठन्नुपविश्य ॥ सूत्रामाणं पृथिवीन्द्यामनेहसꣳ सुशर्म्माणमदितिꣳसुप्रणीतिम् ॥ दैवीन्नावꣳ स्वरित्रामनागसमस्रवन्तिमारुहेमास्वस्तये ॥ १ ॥ नर्मदायै नमः प्रातर्नर्मदायै नमो निशि ॥ नमोस्तु नर्मदे देवि त्राहि मां विपसर्पतः ॥ सर्पापसर्प भद्रं ते दूरं गच्छ महाविष ॥ जन्मेजयस्य सत्रांते आस्तीकवचनं शृणु ॥ आस्तीकवचनं श्रुत्वा यः सर्पो न निवर्तते ॥ शतधा भिद्यते मूर्ध्नि शिंशपायाः फलं यथा ॥ जरत्कारोर्जरत्कार्यां समुत्पन्नो महायशाः ॥ आस्तिकस्सत्यसंधो मां पन्नगेभ्योभिरक्षतु ॥ अगस्तिर्माधवश्चैव मुचकुंदो महाबलः ॥ कपिलो मुनिरास्तीकः पंचैऽते सुखशायिनः ॥ एतान्मंत्रान्पठित्वा ॥ रात्रिसूक्तं जपन् स्मृत्वा देवांश्च सुखशायिनः ॥ नमस्कृत्वा वयं विष्णुं समाधिस्थं स्वपेन्निशि ॥प्राक्शिरा दक्षिणानन एकाकी स्वपेत् ॥ इति शयन विधिः ॥ अथ स्त्रीगमनविधिः ॥ तत्र योगी याज्ञवल्क्यः॥ षोडशर्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ॥ ब्रह्मचार्येव पर्वण्याद्याश्चतस्रस्तु

वर्जयेत् ॥ मनुः ॥ युग्मासु पुत्रा जायंते स्त्रियो युग्मासु रात्रिषु ॥ त्रयोदशी च शेषासु प्रशस्तास्त्वत्र रात्रयः ॥ अमावास्याष्टमी चैव पौर्णमासी चतुर्दशी ॥ ब्रह्मचारी भवेन्नित्यमनृतौ स्नातको द्विजः ॥ एवं गच्छन्स्त्रियं क्षामां मघामूलं विवर्जयेत्॥ स्वस्थ इंदौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ॥ शंखः ॥ स्त्रियः शुक्रेऽधिके स्त्री स्यात्पुंसोऽधिके भवेत्पुमान्॥ तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च सेवयेत् ॥ सुरतां तु स्त्रियं गच्छन्नातुरां न रजस्वलाम् ॥ नानिष्टां नैककुपितां नाप्रशस्तां न गर्भिणीम् ॥ आश्वलायनः ॥ पत्नीमृतुमतीं स्निग्धां तृप्तां भोगविवर्जिताम् ॥ उपेयान्मध्यरात्र्यंते जीर्णेऽन्ने तृप्तमानसः ॥ इति यमः॥ पूर्वरात्रे व्यतीते तु संगच्छेन्नारीमंदिरम् ॥ पादौ प्रक्षालयेत्पूर्वं पश्चाच्छय्यां समाचरेत्॥ मृदुशय्यास्थितः शेते रिक्तशय्यां परित्यजेत ॥ उपानहौ वेणदंडमंबुपात्रं तथैव च ॥ तांबूलादीनि सर्वाणि समीपे स्थापयेद्बुधः ॥ कुंकुमं चांजनं चैव तथा हरितसिंदुरम् ॥ पीतवस्त्रं च तांबूलं संयोगे च शुभावहम् ॥ भर्तुः पादौ नमस्कृत्य पश्चाच्छय्यां समाविशेत् ॥ ततः स्वस्त्रियामृतुदर्शनमारभ्याद्यदिनचतुष्टयैकादशत्रयोदशदिनातिरिक्तषोडशादिनमध्ये पुत्रार्थी युग्मदिने कन्यार्थ्ययुग्मदिने चतुर्थीपष्ठ्यष्टमीचतुर्दशीपंचदशीश्राद्धाहतत्पूर्वदिनव्रतोपवासश्राद्धनिमंत्रितभुक्तशनिरविभौमजन्मनक्षत्रसंक्रांतिरेवतीमूलमघाव्यतीपातवैधृतिरिक्तदिने शय्योत्तरे उपवीती मन्मथगृहं

स्पृष्ट्वा विष्णुर्योनिमित्यादि जपित्वा ईश्वरं स्मृत्वोपेयात् ॥ तद्यथा ॥ स्वयं स्त्री प्राक्शिरः कृत्वा प्रत्यक् पादौ प्रसारयेत् ॥ तांबूलचर्वणं कृत्वा सकामो भार्यया सह ॥ तांबूलेन मुखं पूर्णं कुंकुमेन समन्वितम् ॥ प्रीतिमान्ह्लादसंयुक्तः कृत्वा योनिं समाचरेत्॥विना तांबूलवदनां नग्नामक्रांतरोदनाम् ॥ दुर्मुखां च क्षुधायुक्तां संयोगे च परित्यजेत् ॥ भुक्तवानुपविष्टस्तु शय्यायामभिसंमुखः॥ संस्मृत्य परमात्मानं पत्न्यां जंघे प्रसारयेत् ॥ योनिं स्पृष्ट्वा जपेत्सूक्तं विष्णुर्योनिं प्रजायते ॥ योनिं स्पृशेज्जपेन्मंत्रमसुनीते पुनरिति ॥ मत्सदृशो भवेत्पुत्र इति नत्वा स्मरेद्धरिम् ॥ स्तनौ धृत्वा तु पाणिभ्यामन्योन्यं चुंबयेन्मुखम् ॥ गर्भं धेहीति मंत्रेण योन्यां शिश्नं प्रवेशयत् ॥ मनुः ॥ संतुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च ॥ तस्मिन्कुले भवेन्नित्यं कल्याणं तत्र वै ध्रुवम् ॥ संयोगे चैव भार्यायाः सुदृढस्थिरवीर्यवान् ॥ स्कंधौ वाथ कटिं धृत्वा यथेष्टं मैथुनं चरेत् ॥ इष्टपूर्तिर्भवेद्यावदुभयोः कामयुक्तयोः॥रेतः सिंचेत्ततो योन्यां तस्माद्गर्भं बिभर्ति सा॥ ततो बध्वा दक्षिणस्कंधोपरि स्वकीयं दक्षिणं हस्तं नीत्वा हृदयमालभते ॥ यत्ते सुसीमे इत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छंदः हृदयं देवता हृदयालंभने विनियोगः ॥ ॐयत्ते सुसीमे० ॥ ऋतुकालोपगामी तु प्राप्नोति परमां गतिम् ॥ सत्कुले प्रभवेत्पुत्रः पितॄणां स्वर्गदो भवेत् ॥ आपस्तंबः॥ ऋतौ तु गर्भशंकित्वात्स्नानं मैथुनिनां स्मृतम् ॥ अनृतौ तु

सदा कार्यं शौचमूत्रपुरीषवत् ॥ द्वावेतावशुची स्यातां दंपती शयनं गतौ॥शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥ सोमः शौचं ददौ स्त्रीणां गंधर्वास्तु शुभां गिरम् ॥ पावकः सर्वमेध्यत्वं मेध्या वै योषितो यतः ॥ ऋतौ स्नातां तु यो भार्यां संनिधौ नोपगच्छति ॥ घोरायां भ्रूणहत्यायां पितृभिः सहमज्जति ॥ ऋतुस्नाता तु या नारी पतिं नैवोपविंदति ॥ शुनी वृकी सृगाली स्यात्सूकरी च पुनः पुनः॥ एवं यथायोग्यः सन् स्वशय्यायां यथासुखं प्रबोधपर्यंतं स्वपित्वा पुनः प्रबोध उत्थाय प्रातःस्मरणादीनि कर्माणि प्रतिदिनं कुर्यात् ॥ अकरणे प्रत्यवायः स्मृत्यर्थसारे ॥ नास्तिक्यात्कर्महानौ तु मासेन पतितः स्मृतः ॥ द्वादशाब्दव्रतेनैव तस्य शुद्धिस्तु नान्यथा ॥ तं निरीक्ष्यार्कमीक्षेत स्पर्शे स्नायात्सचैलकम्॥ तेन सह योऽपहास्यं कुर्वन्शब्देन तत्समः॥ तदन्नं भुक्त्वा सद्यस्तु स सर्वो गृह्यते वने ॥ बाहुल्यं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम् ॥ तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेदिति ॥ कूर्मपुराणे ॥ इत्येतदखिलं प्रोक्तमहन्यहनि वै मया ॥ ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥ नास्तिक्यादथवालस्याद्ब्राह्मणो न करोति यः ॥ स याति नरकान्घोरान्काकयोनौ प्रजायते ॥ नान्योऽपि मुक्तये पंथा मुक्त्वाश्रमविधिं स्वकम्॥ तस्मात्कुर्वीत कर्माणि

तुष्टये परमेष्ठिन इति ॥ गोभिलः ॥ यो विप्रः कृतनित्यस्तु स सर्वान्कृतवान्मखान् ॥ संस्नातः सर्वतीर्थेषु ततं तेनाखिलं तपः ॥ इति श्रीमद्भीमेंद्राणीसंगमात्पश्चिमस्यां दिशि श्रीमन्मूलामूठासरिद्युतितटविराजितश्रीमत्पुण्याख्यमहाराजधानीस्थितत्र्यंबकदैवज्ञसुतबालदैवज्ञविरचितंवाजसनेयिनामाह्निकंसमाप्तम् ॥

---

इदं पुस्तकं खानदेशीयरावेरग्राम-
निवासिपरशुरामभट्टतनय-
गोविंदशास्त्रिणा
संशोधितम् ।

---

तदेतत् श्रीकृष्णदासात्मजखेमराजश्रेष्ठिना
मुंबय्यां स्वकीये "श्रीवेङ्कटेश्वर" मुद्र-
णालये मुद्रयित्वा प्रकाशितम् ।
संवत् १९५१ शके
१८१६